श्रीरस्तु ।
श्रीमते हयग्रीवाय नमः ।

# शास्त्रमुक्तावली ।

## मीमांसाकौस्तुभः ।

( द्वितीयाध्याये प्रथमः पादः । )

### अपूर्वाधिकरणम् ।

१ - (सू) भावार्थाः कर्मशब्दा स्तेभ्यः क्रिया प्रतीयेतैषह्यर्थो वि [भि] धीयते ॥ २ - १ - १ ॥

एवं मुक्तेषु धर्मप्रमाणेषु अधुना प्रमेयभूतं धर्मस्वरूपं निरूप्यते । तत्रापि धर्मप्रमाणेषु केषु अर्थो देवात्प्रमाणप्रतिपाद्यो धर्म इत्येवं सामान्यतो धर्मस्वरूपावगतावपि कार्त्स्न्येन तदनवगमा दिदानीं धर्मस्वरूपस्य विशेषतो यगतये तद्गतानेकात्मकरूपो भेदो निरूप्यते । अतश्च उत्सर्गापवादाभ्यां भेद एवाध्यायार्थः । तत्रापि प्राधान्येन भावनाभेदो निरूप्यते । धात्वर्थभेदस्तु तत्सिद्ध्यर्थ, अवच्छेदकीभूतधात्वर्थभेदेन तदवच्छिन्नभावनाया भेदस्य शब्दान्तराधिकरणे वक्ष्यमाणत्वात् । इदं च प्रासंगिक, अत एव धात्वर्थभेदाभावेपि गुणादिप्रमाणेना यतन् भावनाभेदोपि गुणफलाधिकारेणो क्रियत एवेति वक्ष्यते । अपूर्वभेदस्तु भावनाभेदानुनिष्पादितया । सतिहि व्यापाररूपभावनाभेदे फलभेदार्थीनतया द्व्यापारभेदस्य फलभूता पूर्वभेदसिद्धिः सुलभैव । अतश्च धात्वर्थभेदापूर्वभेदयो र्भावनाभेदसिद्धयर्थपात्फलत्वरूपत्वेपि प्राधान्येन भावनाभेदस्यैव शब्दान्तरादिभिः षड्भिः प्रमाणैः प्रतिपाद्यत्वात स एवैकोध्यायार्थः। तत्र च मानाधीना मेयसिद्धिरिति न्यायेन प्रमाणनिरूपणस्य धर्मस्वरूप

निरूपणं प्रति हेतुत्वात् तदनन्तर मेतदारम्भो नायुक्तः। अंगत्वादिनिरूपणस्यापि प्रमाणाधीनत्वे सत्यपि भेदापेक्षत्वस्याप्यधिकत्वादयमेव भेदनिरूपणावसरः। तत्रच प्रतिपाद्यस्य भावनाभेदस्य पूर्वं भेदाधीनत्वात् अपूर्वस्यच साक्षाद्भावनाजन्यत्वाभावेन द्वारीभूतधात्वर्थादि जन्यत्वप्रतीतेः तद्भेदादेव भेदोवसीयते, नान्यथा, व्यापकाभावे व्याप्याभावस्य नियतत्वात्। धात्वर्थादीनांचा पूर्वजनकता फलकरणत्वाधीनेति प्रथमं फलसम्बन्धएव किं धात्वर्थस्य, उत सोमादिद्रव्यस्येति विचार्यते।

यद्यपिच "व्रीहीन वहन्ति, व्रीहीन्प्रोक्षति" इत्यादेः द्वितीयैव व्रीह्यादेः कर्मत्वावधारणात् परिशेषेणैव धात्वर्थस्य करणत्वावगते, "दध्ना जुहोति" "दध्नेन्द्रियकामस्य जुहुयात्" इत्यादेश्च होमस्य प्राप्तत्वेन अविधेयत्वात् विधेयस्य गुणस्यैव करणत्वावगते स्सन्देहाभावेन नोदाहरणत्वम्; अतएव एतदधिकरणापवादभूते- "तानि द्वैध" मित्यादौ इन्द्रियकामाधिकरणेच तयो रुदाहरणत्व मेवम्; तथापि "सोमेन यजेत" "सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकाम" इत्यादौ किं होमादीनां फलभावनाकरणत्वं उत धात्वर्थयेव तदिति विचार्यते।

अत्रच – अपूर्वभेदोपयोगिचिन्तनस्य पादार्थत्वा दपूर्वभेदस्य व्याख्यायार्थभूत भावनाभेदफलत्वात् पादाध्यायसंगती स्पष्टे। अनन्तरपादे शुषाद्यवदानानां कार्यविशेषानिरूपितेसंप्रति स्वर्गादिरूपकार्यस्य करण विशेषनिरूपणा द्रष्टव्या। एतद्विचारोपोद्घातत्वेनापि किं सर्वेषामेव फलभावनाकरणत्वं, उत इतरपदार्थविशेषितस्यैकस्यैवेति चिन्तनीयम्।

तत्र प्राथमिकभावनासम्बन्धस्य हि तावत्सर्वेषामेव पदानां विश्रान्तितोऽपि सम्मतत्वात् पार्ष्ठिकः फलान्वयोऽपि सर्वेषामेवा गृह्यमाणविशेषाद् इत्युचितो नावैकस्यैव फलान्वय इतरेषान्तु तदर्थ-

त्वमिति । नहि गृह्यते विशेषो यदेकस्यैव करणत्वं नेतरेषामिति,
समानपदश्रुत्या धात्वर्थस्य कारकश्रुत्या सोमादीनामपि चाविशेषेण
फलभावनाकरणत्वप्रतीतेः, सति सम्भवे प्रधानान्वय[बाधस्या]न्य
न्याय्यत्वाच्च । एकस्य फलान्वयिनः फलगुणान्वये वैरूप्यस्य प्रत्यय-
लक्षणाया वा प्रसंगापत्तेश्च । अतश्च सर्वेषां फलसाधनत्वादेकेनापि
वाक्येन तत्तत्करणभेदभिन्न भावनाविधानोपपत्तेः सत्रे एकै-
कस्य फलभोक्तृत्ववदेकैकस्य प्रत्येकमेव फलसाधनता, तावत्फलार्थं
मस्तु सह प्रयोगेपि न क्षतिरितिकेचित् । भिन्नप्रयोग विधिविहितानां
सहप्रयोगे प्रमाणाभावेन एका[र्थानेक]र्थत्वेन काम्यकर्मणामिव विकल्पएवे
त्यन्ये । वस्तु तस्तु द्रव्यक्रियादिरूपेणकरणानां भेदेपि तेषां परस्प-
रसापेक्षत्वात् भावनाभेदकल्पनानुपपत्ते रेकस्यां च भावनायां तृती-
यादि वशेन करणानां नैरपेक्ष्यावगमेप्य रुणैकहायन्योरिव द्रव्यक्रिययोः
परस्परापेक्षाय स्वाभाव्येन तृतीयाद्यवगत नैरपेक्ष्यस्य चोपादेयतावच्छेदक-
त्वातिरिक्त विषयत्वाभ्युपगमात् दर्शादिवच्चैकपदोपादानाभावे प्येक
वाक्योपादानात् साहित्यप्रतीते स्तस्य चोपादेयगतत्वेन विवक्षितत्वा
त्समुच्चित साधनत्वाभावेपि साधनानां समुच्चयोपपत्तिरिति प्राप्ते-

अनेकादृष्टकल्पनापत्ते र्न सर्वेषां फलसम्बन्धः । तथाहि-फल
सद्भावनाभेदांगीकारे ताव त्पक्षद्वये प्यदृष्टभेद स्स्पष्टएव । भावनैक्यांगी-
कारेपि तत्रापि परमापूर्वैक्ये तत्त त्करणजन्योत्पत्त्य पूर्वभेदावश्यंभावा
दनेकादृष्टकल्पना । नच-करणानां परस्परसापेक्षत्वेन क्रमिकत्वा
भावा देकमेवोत्पत्त्यपूर्वं कल्प्यतामितिवाच्यम्, तृतीयादिनावगतस्या
न्योन्य निरपेक्षकरणत्वस्य कार्यनिरूपितत्वावश्यंभावात् फले फला
पूर्वेवा तदसम्भवेनोत्पत्त्यपूर्व निरूपितत्वावगते स्तद्भेदस्या परिहार्य
त्वात् । अत एव दधिपयोयागयोः क्रमिकत्वाभावेप्युत्पत्तिवाक्यावगत
नैरपेक्ष्यबलादुत्पत्त्य पूर्वभेदोंगीकृतः श्रीगुरुचरणैः । अतोनेकादृष्ट

रूपत्वेवा, जन्यत्वमात्रवा, संस्कारकत्वंवा ? नाद्य , तथा सति यागस्यापि फलजनकत्वावश्यम्भावात् तस्यचापूर्वमन्तरेणानुपपत्तेः । नाहि यागसोमयो रेका पूर्वजनकत्व सम्भवति । अपूर्वस्य शक्तिरूपत्वेन शक्तिमद्भेदे भेदस्यावश्यकत्वात् । नद्वितीयः, यागानुष्ठानस्य निष्प्रयोजनतापत्तेः । नह्यस्येन्द्रियकामादिहोमवत् प्रयोजनान्तरं कल्प्यमस्ति । अतश्च तस्य फलान्तरकल्पने पुनरदृष्टान्तरकल्पना तदवस्थैव । नापितृतीयः , यागस्यावघातादिव त्संस्कारकत्वायोगेन प्रोक्षणादिव दृष्टद्वारकत्वाभावात् । अतश्च यागस्यफलसम्बन्धे तस्मादेवापूर्वं । सामादेस्तु सत्यपि प्राथमिके भावनाकरणत्वे पाष्ठिकफलसम्बन्धांगीकारे अपूर्वान्तरकल्पनापत्तो दृष्टविधया यागसम्बन्धएव पाष्ठिकांगीक्रियते, तेना दृष्टकल्पना लाघवार्थं धात्वर्थस्यैव फलसम्बन्ध ।

अयमेवचार्थो धातूपपदार्थस्वरूपनिरूपणद्वारेण[मुखेन]सूत्रकृतोक्त । ये[ए]षामुच्चारणएव स्ववाच्ये[स्ववाक्ये]निष्पन्नरूपस्योपलब्धि तानि नामानि,तस्मात्तेभ्यस्साधनाकांक्षा,परा दूरे,नास्तीतियावत्। तदुच्चारणकाल एव तदर्थानां सिद्धत्वमवगतेः स्त स्साधनत्वेन यागादिविधानं नदृष्टविधयोपयुज्यत इत्यदृष्टं कल्प्यम्। येषान्तूत्पत्ती उच्चारणकाले, स्वैर्यप्रयोगेनाविद्यते स्वार्थेनाविद्यतइतियावत्, तान्याख्यातानि, तस्मात्तदर्थेभ्यो निष्पन्नरूपत्वेन प्रतीयमानेभ्य स्साधनाकांक्षा झटिति प्रतीयेत। अतस्तत्साधनत्वेन विधीयमान सोमादि दृष्टविधयैवो पयुज्यत इति अनेकादृष्टकल्पनाभावा ल्लाघवार्थादेव फलमिति भावः ।

ननु – सम्भवत्यपूर्वाख्या वान्तरव्यापारद्वारा फलकरणत्वे क्रियारूपाश्रय व्याप्यत्व विना फलकामनायां सत्या स्वतएवा पूर्वोत्पत्तिद्वारा फलोत्पत्तिप्रसंगेन विधिवैयर्थ्यप्रसंगात् आश्रयाकांक्षोपपत्ते राश्रयस्यापिं गुणनिष्ठ कृति फलजनकतानिर्वाहार्थत्वेन दृष्टविधयैव इन्द्रियकामहोमव त्फलान्तराभावेपि सोमाद्यंगत्वोपपत्ते र्नानेकादृष्टकल्पना, सत्यामपिवा नेकादृष्टकल्पनायां सत्यपिच गुणनि:

एकार्यतानिरूपित यागनिष्ठ करणत्वकल्पनाकृते गौरवे सोमादीनामपि भावनावच्छेदकत्वा विशेषा त्प्रथमसूत्रोक्त धात्वर्थस्यैव भावनावच्छेदकत्व नैवोपपादित,इत्यत आह -

१ – सू - अश्रितत्वा त्प्रयोगस्य ॥ २ - १ - ९ ॥

यद्यपि ताव त्प्राथमिकभावनासम्बन्ध वेळाया सोमादे रपि करणत्वमविशिष्टम् । तथापि पार्ष्ठिकः फलसम्बन्धो यद्भूत प्राथमिकभावनासम्बन्ध बोधकप्रमाणबलवत्त्व तस्यैव वक्तु मुचितो नान्यस्य धात्वर्थस्य । तथाहि – यद्यपि तावत्सोमादेः करणत्व श्रुत्या, लक्षणयाच धात्वर्थस्य । तथापि प्रत्ययार्थस्य भावनाया प्रकृत्यर्थं प्रति "तयोस्तु प्रत्यय" प्राधान्येने' ति स्मृत्या प्राधान्यस्या नुशासितत्वात् व्रीही नवहन्तीतिवत् प्राधान्ये नु गते यागस्य श्रुत्यैव तद्‌गतावोपपत्ति ।

नच – प्राधान्यस्यानुशासनेपि प्रत्ययस्य भावनामात्र एव शक्तिकल्पनेन तत्प्राधान्यस्य लक्षणादिनापि भानोपपत्तौ तत्र शक्तिकल्पना च व्रीहो न वहन्तीतिव त्प्राधान्यस्य श्रौतत्वेनांगस्य श्रौतत्वमिति वाच्यम् । सत्यपि प्राधान्यस्य लाक्षणिकत्वे परिपूर्णं पद पदान्तरणान्वेतीति न्यायेन सोमादिपदानां भावनापदान्वये तस्य परिपूर्णत्वापेक्षणात् ततः पूर्वमेव यागादेरंगत्वावगते तदुत्तरभाविनः सो-माद्यंगत्वस्य दौर्बल्यात् । अतश्च यथैवाग्नेयादिवाक्ये प्रयाजादीनां करणत्वस्य लाक्षणिकत्वेपि उपजीव्यत्वेन पूर्वभावित्वा तदुत्तरभावि श्रौतमपि व्रीहिभिर्यजेते त्यादौ व्रीहीणां करणत्व परम्परासम्बन्धेनैव निर्वाह्यते, एवं सोमादे रपीति सिद्ध धात्वर्थस्यैव फलसम्बन्ध रत्नादीनां तदर्पतेति । प्रयोजनतु सर्वेषां फलसम्बन्धपक्षे विहितयोः क्रियाद्रव्ययो रसम्भवे, वाक्ये सकल्पोत्तर नित्ये तत- पूर्वमपि न

प्रतिनिध्युपादानं, उभयो रदृष्टार्थत्वेन प्रयाजादिवत् प्रतिनिध्यभावात्। प्रारब्धप्रयोगा परिसमापननिमित्तदोषपरिहारार्थन्तु यत्किञ्चिदनियत द्रव्यक्रियोपादानेन प्रयोगसमापन मिष्टमेव । नचैतावता तस्य प्रति निधित्वं, सदृशनियमे प्रमाणाभावेन प्रतिनिधित्वानुपपत्तेः । एवं सोमादेः फलसम्बन्धपक्षेपि तस्या दृष्टार्थत्वात् तदप[चारे]चारे न तत्प्र- तिनिध्युपादानं । प्रक्रान्तसोमप्रयोगस्तु यत्किचिदसदृशमपि द्रव्यं गृ- हीत्वा समापनीय एव । प्रधानाभावे कथं प्रयोगसमाप्तिः? शिष्ट गर्हणान्यथानुपपत्त्या प्रयोगसमाप्तिं प्रति कामनादिव प्रयोगप्रक्रमस्या प्यदृष्टारकत्वस्य षष्ठे वक्ष्यमाणत्वेन प्रधानसत्त्वासत्त्वयो रकिंचित्कर त्वात्। नह्यत्र प्रधानफलं स्वर्गो त्पद्यते, यत्प्रधानासत्त्वे नोत्पद्येते त्याशंक्येत, तस्यतु सांगादेवोत्पत्ते र्न तादृशे विषये उत्पत्तिसम्भवः ।

यत्तु नित्यस्थले प्रत्यवायध्वंसादि, तत्काम प्रधानाभावे नोत्पद्यता; नत्वेतावता शिष्टगर्हणान्यथानुपपत्तिकल्पित दोषपरिहारार्थं प्रयोगो न समापनीयः, प्रयोगारंभस्यैवानुष्ठापकस्य सत्त्वात्; अतो यत्किंचिद्द्रव्यमुपा दाय प्रयोगसमापन युक्तमेव । नचैतावता प्रतिनिधित्व, सदृशनियमे प्रमाणाभावेन तत्त्वानुपपत्तेः । सिद्धान्तेतु सोमादे रदृष्टार्थत्वेन युक्त स्त दपचारे प्रतिनिधिः ।

यत्तु मूले "श्येनोद्भिदादिपदानां नामत्वसिद्धिरपि विचारप्रयो- जनम्, श्येनादिपदार्थस्य फलसम्बन्धे धात्वर्थसामानाधिकरण्या स म्भवा त्र श्येनादिपदानां नामत्वं, अतएव तद्विचारोप्यर्था देतदधिक रणोत्तरं द्रष्टव्य" इत्युक्तम् । तदनादरात् । तथाहि- न तावद्गुणविधिव्य तिराकरणार्थानां मत्वर्थलक्षणादिहेतूनां एतदधिकरणा त्पूर्वमसम्भ वः, एतदधिकरणपूर्वपक्षिणोपि यागवता सोमेनेत्येवं मत्वर्थलक्षणा- या विशिष्टविधिगौरवादेश्च सोमादिवाक्ये अवश्यांगीकार्यत्वेन त- द्भिया उद्भिदादिवाक्ये उद्भित्पदार्थस्यापि यागरूपत्वांगीकारौचित्यात्

प्रकृत्याच, तदा पश्चात् स्वसंजनानुभवसाक्षिकतया पच्यादौ प्रतीयमानस्य व्यापारसमूहस्य धात्वार्थकल्पना प्रपह्नोतुम् । अतश्च सर्वस्यापि फलानुकूलस्य यत्नादे र्धातुनैवोक्तत्वा दाख्यातार्थत्वासम्भवेन प्रत्ययवाच्यया धात्वर्थातिरिक्तभावनाया असम्भव । नचैव तिङर्थाभावः, फलव्यापाराश्रयस्यैव कर्मकर्त्रादिरूपस्य तिङर्थत्वात् । तत्रापि फलव्यापारयो र्धातुलभ्यत्वा दाश्रयत्वमेव लाघवा दशक्य तावच्छेदकम् । एव मेकत्वादिसंख्यापि तिङर्थः, वर्तमानादिकालश्च लडाद्यर्थः, प्रवर्तनाच लिङाद्यर्थः । तत्र फलं व्यापारं प्रति विशेषण, कर्म च फलं प्रति, कर्ता व्यापारं प्रति, सख्या कर्तृकर्मविशेषण, कालादियन्तु व्यापार एव, तथैवानुभवात् । अत श्च सर्वत्र व्यापारविशेष्यक एव बोधः । नचैव " प्रकृतिप्रत्ययौ प्रत्यार्थं सह ब्रूत स्तयोस्तु प्रत्ययः प्राधान्ये न " ति स्मृत्या प्रत्ययार्थस्य प्राधान्यावगतेः कथं प्रकृत्यर्थस्य व्यापारस्य विशेष्यतेति वाच्य, " भावप्रधान माख्यात " इति निरुक्तस्मृत्या भावशब्दवाच्यव्यापारस्य प्राधान्यावगते. , तस्य च " धात्वर्थं केवलः शुद्धो भाव इत्यभिधीयत " इति वैयाकरणस्मृत्या धातुवाच्यत्वावगतेः , विशेषस्मृत्यनुरोधेन सामान्यरूपायाः प्रत्ययार्थप्राधान्यस्मृते स्सुबादिविषयत्वेन व्याख्यानात् ।

वस्तुतस्तु नेयं प्रत्ययार्थप्राधान्यस्मृति. प्रत्ययार्थत्वावच्छेदेन प्राधान्यनियामिका, लिङ्गसंख्यादेः प्रत्ययार्थत्वेपि प्राधान्यानभीकारात् । नापि प्रधानस्य सत प्रत्ययार्थत्वनियमपरा, " सत्त्वप्रधानानि नामानी " ति स्मृत्या लिङ्गसंख्यादीन्प्रतिप्रधानस्यापि प्रातिपदिकार्थस्य प्रत्ययार्थत्वाभावात् । किन्तु यत्रैव प्रमाणान्तरेण सुबर्थस्य करणत्वादेः प्रातिपदिकार्थं प्रति प्राधान्यं प्रसिद्धम् , तदनुवादमात्रमिय स्मृतिरिति नानया व्यापारस्य धात्वर्थत्वेपि विशेष्यताप्रतिबन्ध । एवञ्च पचतीति यत्राख्यातस्थले एक

अयको विक्लत्यनुकूलो वर्तमानो व्यापारइति बोधः । पच्यत इति कर्माख्यातस्थलेच पकाश्रयका या विक्लत्ति स्तदनुकूला भावनेति । पचति देवदत्तः पच्यते तण्डुल इत्यादौ देवदत्ततण्डुलयोः प्रथमान्तयोः यथाक्रम माख्यातोपात्ताभ्यां कर्तृकर्मभ्या मभेदान्वयः । इतरकारकाणान्तु यथायोगं साक्षा त्परम्परासम्बन्धेन व्यापाररूपे धात्वर्थे एवान्वय इति ध्येयम् ।

चैत्रेण स्थीयत इत्यत्र भावाख्यातेतु कर्तृकर्मणो रप्रतीतिः संख्याऽनन्वितैव, धात्वर्थान्विता वा । नचैवं धात्वर्थस्य द्वित्वादिविवक्षायां द्विवचनाद्यापत्तिः, अनुशासनबलेन एकवचनस्यैव साधुत्वात् । यत्तु उष्ट्रासिका आस्यन्त इति भावेपि बहुवचनं, तद्व्यक्तारवचना दृत्वैव साधित्यवगन्तव्यम् । अतश्च क्वचिदप्याख्याद्भावनावाचित्वाभावात् कथं तस्या समानपदश्रुत्या वरणत्वावगति रिति चेन्न – धातोः फले तदनुकूलव्यापारे च शक्तिकल्पनाया मपि धात्वर्थातिरिक्ताया आख्यातवाच्याया भावनाया अनपह्नवात् ।

तथाहि – अनुकूलव्यापारो धात्वर्थ इति वदतोनुकूलत्वं किं जनकत्वमात्र मभिप्रेतं ? प्रयोजकत्वसाधारणं वा ?

नाद्यः, विक्लत्तिरूपफलजनकीभूत शरीरगतक्रियाविशेषजनकस्यात्मगतस्य प्रयत्नादे रुपक्षीणस्य फलाजनकत्वेन असंग्रहापत्तेः । नच तस्य पचतीत्यतो ननुभवादेव तदसंग्रहोप्यदोषः, पचति पाके यतति इत्येवंविधविवरणा देवानुभवस्या पह्नोतु मशक्यत्वात् ।

नद्वितीयः, कृष्यादीनामप्यत्यन्तव्यवहितानां विक्लत्ति प्रयोजकत्वेन संग्रहापत्तेः । नच फलकारण तत्कारणीभूतव्यापारयो रेव ग्रहणमित्यत्रापि किंचिन्नियामक मस्ति, उभयप्रवेशस्य गौरवग्रस्तत्वात् ।

ननु फलानुकूलत्वस्य शक्यतावच्छेदकत्वानङ्गीकरणात् यत्नस्वाधस्सन्तपनत्वादीनां तत्त्वेन शक्यतावच्छेदकत्वाङ्गीकारात् यावत्सु व्यापारेषु पचेः प्रयोगप्रतीतिः तावतामेव वाच्यत्वकल्पना नातिप्रसङ्ग इति वाच्यम्, एवं तर्हि पचति पाके यतते पाकं करोति पाकं भावयति इत्यादिविवरणाय यत्नादीनां पाकात् पृथक्करणेन यत्नादीनां पचौ सङ्ग्रहानुपपत्तेः ।

ननु यत्नादिसमभिव्याहृतपच्यादेः फलमात्रबोधकत्वकल्पनादेव व्यापारस्य पृथग्विवरणोपपत्तिरिति वाच्यम्, तथात्वे व्यापारबोधकसामग्रीतो व्यापारबोधप्रसक्तौ तद्बाधं प्रति यत्नादिसमभिव्याहारस्य प्रतिबन्धकत्वकल्पना गौरवापत्तेः । क्रियादिसमभिव्याहृतधातुत्वस्यैव व्यापारशक्ततावच्छेदकत्वकल्पने च कार्यकारणभावद्वयकल्पनस्य शक्ततावच्छेदकगौरवस्य चापत्तेः । यत्नादिसमभिव्याहृतधातुतः व्यापारानुभवापलापापत्तेश्च ।

ननु विवक्षितस्यैव कारकव्यापारस्य पचिनोपादानात् यत्नादीनां विवक्षाविरहादेव पृथक्करणोपपत्तिरिति वाच्यम्; देवदत्तः पचति देवदत्तः पाके यतते इत्यत्र देवदत्तनिष्ठयत्नादेः विवक्षायाः अभावात्, अन्यथा भवन्मते धातूपात्तव्यापाराश्रयत्वाभावात् देवदत्तस्य प्रथमान्तत्वानुपपत्तेः । ननु देवदत्तनिष्ठव्यापारान्तरविवक्षया तदुपपत्तिः, तथा सति पचतीत्यत्र भवन्मते यत्नबोधकशब्दाभावेन विवरणवेलायां यत्नानुवादानुपपत्तेः ।

अतो वस्तुतः पचतीत्यत्र भासमानोऽपि यत्नादिः न पच्यर्थ इत्यभ्युपगन्तव्यम् । कः तर्हि पच्यर्थ इति चेत्? फलावच्छिन्नो व्यापारविशेष एव, यो वस्तुतः फलजनकः । फले तज्जनकव्यापारविशेषे च त्वदुक्तरीत्यैव वा अतिरिक्ता शक्तिः, तयोस्तु जन्यजनकभावः संसर्गमर्यादालभ्यः । अस्मिन् पक्षद्वये द्वितीयार्थः फलाश्रयत्वं, न तु फलमपि, तस्य धातुनैव लाभात् ।

अथवा व्यापारविशेषएव धातोश्शक्तिः, नतु फलेऽपि, गौरवात् ; द्वितीयायास्तु फलमर्थः, नत्वाश्रयत्वमपि, तस्य प्रकृतिप्रत्यय समभिव्याहारादेव बोधोपपत्तेः ; नन्वेवं त्यजिगम्योः पर्यायत्वापत्तिः, संयोगानुकूलं हि कर्म गमेरर्थः, विभागानुकूलंत्यजेः, तद्यदिकर्ममात्रं धात्वर्थः फलसामान्यं च द्वितीयार्थः तदाऽत्यजिगम्योः पर्यायत्वापत्तिः, तथा च ग्रामंगच्छतीति वक्तव्ये ग्रामंत्यजतीति प्रयोगापत्तिरिति चेत् ? गमिधातु समभिव्याहृत द्वितीयाया स्संयोगरूपफलविशेषबोधकत्वं त्यजि समभिव्याहृतायाश्च विभागबोधकत्वमिति व्युत्पत्तिकल्पनेन उक्तातिप्रसंग निरासात् ।

वस्तुतस्तु विजातीय फलानुकूलत्वात् द्व्यापारविशेषनिष्ठा फलानुकूलान्तिमव्यापारनिष्ठाया यागत्वादिजाति रखण्डोपाधिरेव वा तत्तत्फलजनकतावच्छेदकतया सिद्धा तत्र धातुशक्यतावच्छेदिका सती तत्र धात्वर्थः । एवं कर्मत्वकर्तृत्वादिधर्मपि क्रियाजन्यफलशालित्वादि समनियतं जातिरूप मखण्डोपाधिरूपं वा सामान्यमंगीकृत्य तस्यैव द्वितीयार्थतावगन्तव्या । अतएव व्यासज्यवृत्तिकर्तृत्वं देवतात्वंचेति सिद्धान्तोपि संगच्छते, अन्यथा आश्रयभेदेन कृति व्यक्ति भेदस्यावश्यकत्वात् कर्तृत्वैक्योपपादनानुपपत्तेः । तस्य च सलम्बन्धिकत्वांगीकारात् निरूपकापेक्षायां करणादिना निरूपकेणान्वयोपि नानुपपन्नः । अस्मिंश्च पक्षे फलानुकूल व्यापारार्थकेषु पच्यादिषु प्रयोज्य व्यापाररूपस्य फलस्य नावश्यं शब्देनैव भावनापेक्षा, पाकत्वादिसमनियतस्य विक्लत्यनुकूलत्वादिधर्मस्या क्षेपेणैव भानोपपत्तेः । एवं प्रयोज्यव्यापाररूपफलवाचिष्वपिधातुषु भवति विक्लियतीत्यादिषु वाच्येन विक्लतित्यादि सामान्येन स्वसमनियतस्य प्रयोजक व्यापारजन्यत्वस्याक्षेपेणैव बोधोपपत्ते नं तदंशे शब्द व्यापारकल्पना युक्ता । कतरशो भयत्र विवरणेन नियमेन तेषामुल्लेखः । नहि पचतीत्यस्य विक्लत्या विक्लियतीत्यस्य वा कृत्या विवरणं क्वचि न्नियतं दृश्यते । दत्तस्यपी-

उपप्रयोजकव्यापारयोरन्यतरवाचिषु धातुषु इतरमर्थादाक्षेपेणैवेति न तस्मिन्नपि शब्दव्यापारकल्पनावसरः । अत एवोक्तं वार्तिककृता " कदाचिदभिधीयमानकर्मांशस्याक्षिप्तप्रयोज्यव्यापारं स्वयमाक्षिप्तप्रयोज्यव्यापारं च प्रयोजकव्यापारमात्रं विवक्ष्यते, घटं करोत्येष न पचतीति कदाचिदाक्षिप्तप्रयोजकव्यापारं प्रयोज्यव्यापारमात्रं घटो भवति विक्लिद्यन्ति तण्डुलाः " इति । तत्सिद्धं फलानुकूलयावद्व्यापारविशेषवाचित्वं अन्तिमव्यापारवाचित्वं वा पाकत्वयागत्वादिजातिरखण्डोपाधिर्वा तत्तद्धातुशक्यतावच्छेदकं शक्यतावच्छेदकं च तत्तद्धातुत्वमिति । अतश्च फलानुकूलव्यापारसमूहस्य पचधात्वर्थत्वेऽपि तदनुकूलस्य पदार्थान्तरस्य तु पृथक् क्रियमाणस्य धात्वर्थत्वायोगात् विवरणवेळायां च भासमानस्य भानकारणजिज्ञासायां धातोरन्यत्रव्यापृतत्वात्, पारिशेष्यात् विभक्तेरेव तद्बोधकत्वमिति निश्चीयते । तत्र पचति पाकं भावयतीति अनुकूलव्यापारवाचिणिजन्तभूधातुना विवरणात्तस्याख्यातार्थत्वात् कूलव्यापार एव तिङर्थो नतु यत्नमात्रं रथो गच्छतीत्यादौ रथे यत्नासम्भवेन अव्याप्त्यापातात् । अत एव साधारण्येनानुकूलव्यापार एव तिङर्थः । नच पाकं करोतीति यत्नार्थकेन कृञा विवरणात् विशेषे यत्नार्थकत्वं करोतिर्भावयति पर्यायत्वेन यत्नार्थकत्वासिद्धेः । यथैव हि घटो भवतीत्यादौ भवनकर्तृत्वं प्रतिपन्नस्य घटस्य तत्परो भावयतीत्यादौ भावयतिकर्मत्वं, एवं तत्परं करोतीत्यत्र करोतिकर्मत्वमपि । अतश्च भवत्यर्थे कर्तृकर्मत्वाविशेषात् करोतिर्भावयति पर्यायो नयत्नार्थकः । अतएव रथो गच्छतीत्यत्रापि करोतिना विवरणमविशिष्टम् ।

किंच यत्नार्थकत्वे करोते र्चेतनेरिव कर्मकताऽऽपत्तिः । अतश्च सकर्मकत्वाकर्मकत्वरूपधर्मभेदात् करोतियत्योः पर्यायता, अपितु भावयति पर्यायत्वमेवेति, – तद्विवरणमप्यनुकूलव्यापारवाचित्वपक्ष लिङ्ग-साधकम् ।

यत्तु पचति पाकेयनते इत्येव पचनविवरणं, तत् लाक्षणिकम्, संग्राहकलाघवानुरोधेन अनुकूलव्यापारे शक्तौ गृहीतायां पचत्वेन तद्बोधस्य लक्षणयांगीकारात् । यच्च सामान्यवाचकस्य पदस्य लक्षणयापि क्वचिद्विशेषपरत्व, नतु यत्नादिविशेषवाचकस्य रथादिनिष्ठापि शेषलक्षकत्व, जहत्स्वार्थलक्षणापत्तेः । अतोविक्लित्तिरूपफलोद्देश्यक. पाकानुकूलो व्यापारसमूहस्य तिङर्थः । तत्र च सर्वानुगतस्यान्योत्पाद क व्यापारत्वस्यैव शक्यतावच्छेदकत्वात् तेन रूपेणावगता द्वोधेपि तत्तद्विशेषरूपेण तत्तदितिकर्तव्यताविधिभ्यो बोधा न तेषामपि वैय र्थ्यमिति पार्थसारथिमतानुयायिन ।

वस्तुतस्तु तत्तज्जन्यभेदेन तत्तदुत्पादकभेदेनच व्यापारस्य भेदादेकशक्यतावच्छेदकाभावेन सर्वानुगतैकशक्तिकल्पनानुपपत्ते स्तत द्विशेषविषयकतत्तच्छक्तिकल्पनेच तत्तदितिकर्तव्यताविधीनां वैयर्थ्या पत्ते स्तेषां तात्पर्यग्राहकतांगीकारेच अनेकशक्तिकल्पनस्य तावद्यस्य भावात् लाघवादेकैव शक्ति रन्येषा लक्षणादिना विभ्यन्तरेण वा बोध इत्यंगीक्रियते । नच क शक्ति क लक्षणेत्यत्र नियामका भाव, पचति पाके यतते पाक करोतीत्यादिविवरणस्यैव पञ्च शक्तिग्राहकत्वात् । नच लघ्वाद्यलाघवानुरोधेन अनकशक्ति कल्पना युक्ता, गगापदस्यापि तीरे तदापत्ते. । यत्रापि गुरु भूतैक शक्यतावच्छेदकानुरोधेन एकशक्तिकल्पन, तत्रापि लघुभूते कशक्यतावच्छेदकसम्भवे लघ्वाहकलाघवार्थ गुरुभूतावच्छेदकांगीकरण मन्याय्यमेव । समाद्यानामवच्छेदकमतीत्युत्तरमतीतिकत्वेन तन्निष्ठगौरव स्य फलमुखत्वेना प्रामाणिकत्वात् । अतश्च यत्नत्वस्य जातिरूपत्वेन लघुत्वाच्छक्यतावच्छेदकत्व । नच यत्नत्वेन रूपेणभानाभाव, पच तिपाकेयतते पाकंकरोतीति विवरणस्यानुभवसिद्धत्वात् ।

यत्तु कृञो यत्नार्थकत्व, भावयतिपर्यायत्वादित्युक्त, तन्न, आ ख्यातवत् करोतेरपि यत्नार्थकत्वस्यैव न्यायेनांगीकारात् । नच श

च्छतावच्छेदकस्य यत्नस्य अप्रतीयमानस्य तथापि मनुष्यो वा रथं करोति यत्नार्थकत्वे, प्रयत्नाभावे वातरोगादिना स्पन्दमाने चैत्रे स्पन्दानुकूलविजातीयवायुसंयोगरूपव्यापारसत्त्वेऽपि नायं स्पन्दं करोतीति प्रयोगदर्शनात् यत्नार्थत्वप्रतीतेः व्यापारजन्यत्वाविशेषेऽपि यत्नजन्यत्वाजन्यत्वाभ्यामेव घटाङ्कुरयोः कृताकृतव्यवहारदर्शनाच्च । अथ बीजेनाङ्कुरः कृतः रथो गमनं करोति रथाटीपाकं करोतीत्यादौ अचेतनेऽपि प्रयोगात् अनुकूलव्यापारवाचित्वम्, उभयविधव्यवहारत्वे शक्यतावच्छेदकलाघवस्यैव नियामकत्वात् । अचेतने कृत्याश्रयत्व व्यवहारस्तु अनुकूलव्यापारे लाक्षणिकः । अत एव चैत्रादौ प्रतीत्यपि शोभनं पाकं करोतीत्यादौ शोभनाश्रितः पाकानुकूलो यत्न इत्येव प्रतीयत इति केचिदुक्तम् । अतो यत्न एव कृञर्थः ।

यत्तु कृञो यत्नार्थकत्वे यतते रित्याकर्मकतापत्तिः । फलव्यधिकरणव्यापारवाचकत्वं हि धातोः सकर्मकत्वम् । यथा - पचादेः, फलस्यौदननिष्ठत्वात् व्यापारस्य च देवदत्तादिनिष्ठत्वात् । अकर्मकेषु शयनासनादौ क्रियाफलयोरेकनिष्ठत्वात् न सकर्मकत्वम् । अत श्च यत्नजन्यफलस्य कर्मण्यभावादेव यतति रकर्मकः, तथैव कृञोऽपि स्यात् । अथ ज्ञानजन्यस्य ज्ञाततारूपफलस्येव कृतिजन्यस्या व्युत्पत्ति रूपस्य तस्य कर्मणि स्वीकारात् ज्ञाधातुवदेव कृञोऽपि सकर्मकत्वं ततो यतते रपि तदापत्तिः । ततश्च देवदत्तेन क्रियते घट इति वत् यतति धातोरपि कर्मणि लकारापत्तिः । यतति यदा कृञोऽपि तदनापत्तिः । घटं करोतीत्यादौ घटे द्वितीयानापत्तिश्च । कृञश्च सकर्मकत्वाङ्गीकारे "कर्मवत्कर्मणा तुल्यक्रियः" इत्येतत्सूत्रविहितय गाधनापत्ते क्रियते घटः स्वयमेवेत्यनापत्तिश्च । तद्वदेव या यततेरपि तदापत्तिरित्युक्तम्, - तन्न, वस्तुतो य फलव्यधिकरणो व्यापारः तद्वाचित्वं धातोः सकर्मकत्वमभिमतं किंवा फलव्यधिकरणत्वेन व्यापारवाचकता अभिमता ?

साय, पच्यादेरपि फलाविवक्षाया मकर्मकत्वाङ्गीकारात् तत्र फलव्यधिकरणत्वस्य वस्तुत स्वरूपत्वा इतिव्याप्ते । नच पैवक्षिवा कर्मकत्वस्यत्वेपि स्वाभाविकाकर्मकत्वानङ्गीकाराद् स्वाभाविकसकर्म कत्वलक्षणाव्याहति, एवमपि यतत्यादौ स्वाभाविकाकर्मके तत्परि रूपस्य फलस्य यत्नव्यधिकरणत्वेना तिव्याप्ते रनिवारणात् ।

नच धात्वर्थभूतफलसामानाधिकरण्यवैयधिकरण्ये एव सामयो लक्षणे, तापरिग्रह न यतते रर्थोऽपितु फलसमानाधिकरणक्रियैवति वा- च्यम्, तथा च करोतेरपि तत्परिग्राहित्वेन फलभेदापत्त्या तस्य दोषात्सगेन तद[फिर]धाचि वे बाधकाभावात् । आसनशयनादीना मपि फलादिकसंयोगेन स्वाभाविकसकर्मकत्वस्य चैत्रमास्यते मास इत्यादिप्रयोगसिद्ध्यर्थं म ाकृतत्वात् तत्र चफलव्यापारयो रेकनिष्ठाया दुष्टलक्षणाव्याप्तश्च ।

अत एव न द्वितीयोपि, फलव्यधिकरणत्वस्य वस्तु स्वभावबल लभ्यत्वेन पाच्यताङ्गीकारे गौरवात् । अतो नैव सकर्मकाकर्मकत्वयो निरुक्ति । किन्तु अविवक्षाविरहविशिष्ट कर्माकांक्षधातुत्व सकर्म- कात्वम् । अस्तिचेद् घट करोतीत्यादौ कुतोनियमन विवक्षायां सत्यां कर्मपदसाकांक्षत्वात् । ननु पर्यायत्वेपि यतते आकांक्षाया एकत्व विशेषधर्मत्वेन पर्यायत्वा बाधकत्वात् । अत्र यथैव कर्मत्वनिरपेक्ष स्पष्ट नानयतिपदापेक्ष किन्तु समानार्थकर्तारि द्वितीयैव ॥ साकांक्षा, तथा पर्याय वति दृत्र एव कर्माकांक्षा नेयतते । अत्र च कर्माविवक्षायां पच्यादेर कर्मकत्वम विवक्षाविरह वैशिष्ट्याभावा दव्याहत । आ सनादीनाच कालादियोगविशिष्टाना कर्माकांक्षा वादविरुद्ध सकर्मकत्वम् ।

एव यत्रैक एव धातुरर्थान्तरे सकर्मकोऽर्थान्तरे त्वकर्मक तत्रा प्येतस्यैव तत्तदर्थ प्रतिपादकत्वरूप धर्मपुरस्कारेण कर्मभावाभावौ तदनाकांक्षाते द्रष्टव्ये । यथा गृधातो अधनर्थस्य प्रत्यगान

॰क्रियार्थोपपत्तिरिति मुख्यविशेष्यैव भावना । एतेन भावनाया मुख्यविशेष्य त्वे पाकभावनाजायत इत्यस्मिन्नर्थे पचति भवतीति प्रयोगापत्तिरिति दूषणमिष्टापत्त्यैव निरस्तम् । अतएवोक्तं वाक्यपदीये " बहुष्वपि तिङन्तेषु साकांक्षेष्वेकवाक्यता " इति ।

किञ्च भवन्मते सर्वकारकाणां धात्वर्थे तस्य कालादेश्चभावनायां संख्याभावनयोश्च प्रथमान्तपदोपस्थाप्ये अन्वय स्वीकाराद्व्युत्पत्ति वैचित्र्यकल्पनापत्तिः । तद्वरं वक्ष्यमाणरीत्या सर्वेषां भावनान्वयांगीकारादेकैव व्युत्पत्तिर्युक्ताकल्पयितुम् ।

एतेन प्रथमान्तपदोपस्थाप्ये भावनान्वयानंगीकारेपि आख्यातलक्ष्येकर्तरि कर्मणिवा तदन्वयइति न भावनाया मुख्यविशेष्यत्व मिरयपास्तं, व्युत्पत्ति वैचित्र्यतादवस्थ्यात ।

किञ्चास्मिन् पक्षे "भावप्रधानमाख्यातं " इति स्मृतिविरोधः । तथाहि - न तावदियं स्मृतिः भावशब्दवाच्य भावनाप्राधान्यं प्रकृत्यर्थापेक्षया विधत्ते, तस्य प्रकृतिप्रत्ययाविति स्मृत्यैवसिद्धेः । किन्तु यदाख्यातं शक्तिलक्षणासाधारण्येन भावनाऽन्यथा कालकर्त्रादिपर तत्र भावनायाः प्राधान्यं, नतु कर्त्रादेरित्येवं परम् । अतएव " धात्वर्थः केवलःशुद्धो भावइत्यभिधीयत " इति व्याकरणस्मृत्या धात्वर्थस्यभाव परिभाषणेपि नास्यां निरुक्तस्मृतौ भावशब्देन तद्ग्रहणम् । तथासति धातोरेव भाव प्रधानत्वापत्त्या आख्यातशब्दस्य भावप्रधानत्वानुपपत्तेः । किन्तु णिजन्तस्य भुवोजन्यत्व व्युत्पत्त्या आख्यातार्थभावनायाः । वैयाकरण परिभाषणन्तु तच्छास्त्र विहितकृत्यविषयं, न निरुक्तविषयमपि, तस्य परिभाषारूपत्वेनान्यत्राप्रवृत्तेः। तदपि च नपुंसके । भावेक्तइत्यादौ तुशुद्धधात्वर्थ ग्रहणमेव नतु स्वरूर्थभाव ग्रहणमित्येतदर्थम् ; नतु भावपद शक्यनियमार्थं, प्रवृत्तिनिमित्तादे स्तदनुपपत्तेः। नच"सर्वमाख्यातजंनामे " ति निरुक्तकारेणाभिधानात् आख्यातशब्देन धातु रेवोच्यतइति वाच्यं,

कृदन्तेधातौ चाख्यातपदप्रयोगाभावेन आख्यातपदस्य धातुवाचित्वानुपपत्तेः । निरुक्तेनाममित्यंचने चाख्यातशब्देन लक्षणयाख्यातान्तस्यधातोर्ग्रहणं नानुपपन्नम् । अतएव तान्याख्याता नीति जैमिनिसूत्रेपि चाख्यातशब्देन लक्षणया ख्यातान्तधातोर्ग्रहणम् । एतावांस्तुविशेषः, जैमिनिसूत्रे आख्यातान्तत्वं विशेषणं, तेनतिङन्तस्यैवधातोर्ग्रहण । निरुक्तेतूपलक्षणं, तेनतत्र तिङन्तधातुस्वरूपस्यैव । नत्वेतावता आख्यातशब्दस्यधातुवाचित्व, कृदन्तेधातौ पाकइत्यादौ तत्पदप्रयोगाभावेन तद्वाचित्वानुपपत्तेः । अपितु तिङ्वाचित्वमेव । अत्र आख्यातप्रतिपाद्यानेकपदार्थविषये कस्य प्राधान्यमितिजिज्ञासायां भावनाप्राधान्यमनया स्मृत्यानियम्यते । एवं " सत्वप्रधानानिनामा ", नीत्यत्रापि अनेकार्थप्रतिपादकेषु प्रातिपदिकापरनामधेयेषु नामसुपाचकोद्वाचकइत्यादिषु विभक्त्युपात्तसंख्यान्वययोगिसत्वपदाभिधेयस्य कर्तुरेव प्राधान्यं नतु पाककृतेरित्ययमर्थोवगम्यते । नामत्वाविशेषेपि च यत्र घटादिपदे घटघटत्वरूपयोरुभयोरपि अर्थयोर्विभक्त्युपात्तसंख्यान्वययोगित्वरूपसत्वत्वसत्ता तत्रोभयोरपि शब्दत प्राधान्यं । अतएव आकृत्यधिकरणेभिहित " यत्[त]ती[त्या]यादौ जातेरेव संख्याकारकान्वयोन्यत्रतु लक्षितव्यक्तेः जातिव्यक्त्योश्च नवैशिष्ट्यावगाहीबोधः । किन्तु बोधद्वय शक्तिलक्षणाजन्य"मिति । अतस्तत्रोभयोस्सत्वभूतत्वादुभयोरपि प्राधान्य । तदेव आख्यातेनामसु च अनेकार्थप्रतिपादकेषु अनया स्मृत्या प्राधान्य नियम्यते । सुबादिष्वनेकार्थप्रतिपादकेषु प्रधानभूतक्रियान्वयित्वात्कारकादेरेवप्राधान्यम् । नतु लिङ्गसंख्यादे. । प्रधानभूतक्रियान्वयित्वं च क्रियान्वयित्वविरहे कारकत्वस्यायोगात् । क्रियाया. प्रधानत्वंच क्रियापद विनाकारकाणां नैराकाङ्क्ष्यादर्शनात । अतः प्रधानभूतक्रियान्वयित्वात सुबर्थेकारकादेरेव प्राधान्यम् । लिङ्गसंख्यादेस्तु समानाभिधान श्रुत्या तदन्वयित्वम् । तत्र साक्षादयोग्यमिति पदश्रुतेर्योग्यतारूपलिङ्गाख्य वाक्तिकः प्रातिपदिकार्थं अन्वयइति प्रातिपदिकार्थस्यापि लिङ्गसंख्येप्रति प्रा

प्रस्तुतस्तु तथापि साक्षात्परम्परासाधारण्येन भावनायामेवान्वयः, प्रधानान्वयस्याभ्यर्हितत्वात् । धात्वर्थस्य तु भावनायामेवान्वयः, प्रकृत्यर्थत्वात् कारकत्वेन विवरणाच्च ।

किञ्च धात्वर्थस्याप्यत्र कारकत्वेनान्वयाभावे तृतीयान्तानां ज्योतिष्टोमादीनामनन्वयापत्तिः । न च धातुवाच्यायां अभेदलक्षणायां वा तृतीयेति वाच्यं, करणत्वरूप श्रौतार्थाविवक्षायां कारणाभावात् । अभेदलक्षणायां च तृतीयायाश्छन्दसिकाप्यदर्शनाच्च । धान्येन धनवानित्यादौ यथैव धान्याभिन्नधनवानित्यर्थः, धान्यस्य धनसम्बन्धोत्पत्तिं प्रति करणत्वोपपत्तेः दण्डेन घटो भवतीतिवत् लक्षणायां प्रमाणाभावात् । अत एव भासमानोऽपि धनधान्याभेदः पार्ष्ठिकान्वयलभ्य एवेति न तदर्थमपि लक्षणा । अतो लक्षणायाः क्वाप्यदर्शनात् तृतीयान्तनामधेयानुरोधेनापि धात्वर्थस्य करणत्वमवश्यमङ्गीकर्तव्यं । अत एव याग्यकरणत्वस्य पदार्थविधयाभासमानत्वात् धात्वर्थस्यापि करणत्वं न संसर्गतया लभ्यं । अपि तु धातुलभ्यमेव । अतश्च धात्वर्थो यागादिः करणत्वेनान्वेति । तच्च कारकत्वात् भावनायामित्यपि द्रष्टव्यम् ।

एवं लडादिवाच्यः कालोऽपि पार्ष्ठिकान्वयलभ्य धात्वर्थद्वारा वा साक्षात्सम्बन्धेनैव वा भावनान्वयी ।

एवं विधिरपि प्रवर्तनारूपः प्रधानभूतायां तस्यामेव भावनायामन्वेति जनकत्वसम्बन्धेन । संख्यायास्तु प्रतीत्यनुरोधात् अनुशासनानुरोधाच्च भावनाक्षिप्त कर्तृत्वकर्मत्वान्यतरयोरन्वयं । भावना हि कर्तृत्वकर्मत्वे अखण्डोपाधिरूपे आक्षिपति । ते च स्वाश्रयमाक्षिपतः । कर्तृत्व कर्मत्वयोश्चाक्षेपलभ्ययोरपि शान्त्याद्यसिद्ध्यर्थं लक्षणा, न तु तदाश्रयस्यापि । सर्वं चैतत् विस्तरेण कर्त्रधिकरणे निरूपयिष्यते ।

तत्र शबादिविकरणस्थले तिङ्वाच्या संख्या कर्तृत्वान्विता । यगादिविकरणस्थले, क्वचित्कर्मत्वान्वितापि । न तु तदाश्रयान्विता,

तस्याशाब्दत्वात् । अतएव दर्शपूर्णमासादावाश्रयभेदेऽपि कर्तृरैक्यादेक वचनं । क्षौमेवसानाविरयत प्रमाणान्तरानुसारात् अधिष्ठानलक्षणा मंगीकृत्य संख्यान्वय आश्रयएवेति विशेषः । अतस्संख्यायाः कर्तृक र्माख्यातस्थले तावत् तत्रैवान्वयइति मूलानुयायिनः ।

वस्तुतस्तु प्रधानान्वयस्याभ्यर्हितत्वात् सुप्[स्मृत्य]भिहित संख्याया इवास्या अपि पार्ष्ठिकान्वयलभ्य कर्तृत्वद्वारकः कर्मत्वद्वारकोवा परं परासम्बन्धेन भावनायामेवान्वयः । भावाख्यातस्थलेतु भावनाया मेवान्वयस्संख्यायाः । यथा चैत्रेणसुप्यते स्थीयते इत्यादौ । अत्रहि स्थापादिकृति स्तिङर्थो खण्डोपाधिरूपः कर्तृत्वन्तु तृतीयार्थः । अत एव चैत्रेणकिंक्रियते इति प्रश्ने सुप्यत इत्युत्तरंसंगच्छते । अतः प्रती त्यभावात् नात्र कृति स्तिङर्थइति परमत मपास्तम् । अतस्तत्र भाव नायां साक्षात्सम्बन्धेनैव संख्यान्वयः । नचैवं तस्याद्वित्वादिविवक्षायां द्विवचनापत्तिः, एकवचनस्यैव तत्र साधुत्वस्मृतेः तेनैव विवक्षितसंख्या लक्षणोपपत्तेः । नचैवं साक्षात्सम्बन्धेन विभक्त्युपात्तसंख्या योगित्वरूप सत्वतापत्तेः भावप्राधान्यानापत्तिः, सत्वतास्वीकारेऽपि भावत्वानपायात् । अस्याहि स्मृतौ भावस्य प्राधान्यमिति नियमः क्रियते नतु सत्वातिरिक्तत्वे ति संख्यायोगेऽपि प्राधान्यप्रसंगात् । अतो भावत्वानपायात् संख्या न्वयेऽपि न प्राधान्य क्षतिः । अस्तु वा कर्तृकर्मान्वयद्वारधान्वयः पार्ष्ठिक स्संख्यायाः । अतो भावाख्यातस्थलेऽपि साक्षात्सम्बन्धाभावेऽपि धात्वर्थ द्वारैव भावनान्वयोपपत्तिः ।

यत्तु गगने न स्थीयत इत्यादौ यत्नस्य बाधः तत्र पटो भवती त्यादौ प्रथमान्तपदान्वयस्येवाश्रयत्वलक्षणायां कारणाभावात् धात्वर्थ एव संख्यान्वयो नान्वितावा इति केचित् ।

वस्तुतस्तु भावप्रधानस्मृत्या आख्यातत्वावच्छेदेन भावनाप्राधा न्यस्य विहितत्वात् तदन्यथानुपपत्ति रेवाश्रयत्वलक्षणाबीजम् ।

तदेवं सर्वकारकाणि प्रति भावनायाः प्राधान्ये तिङुपात्तकर्त्रादि प्रतिसुतरां प्राधान्यापत्तेः, तदनंगीकारे भावप्रधान माख्यातमिति स्मृतिविरोधस्य दुष्परिहरत्वा द्भावनाया एव मुख्यविशेष्यत्वमिति सिद्धम्।

अतएव भावप्राधान्यस्मृत्या भावनायाः प्राधान्यावगमात् अप्रधानभूतयोः कर्तृकर्मणो स्तल्लक्ष्यत्वम्। अन्यथा ते कृदन्तवदेव तद्वाच्ये स्यातां नतु तल्लक्ष्ये। तथाहि- यत्रैकस्मात्पदादनेकार्थ प्रतीति स्तत्रानेक शक्तिकल्पनागौरवभिया एकत्रैवशक्ति रपरत्रलक्षणेति अवश्य मभ्युपगन्तव्यम्। तत्र च नियामकापेक्षायां प्रथमं तावत्प्रधानस्य लोकेवेदेच गुणभूताक्षेपकत्व दर्शना त्प्राधान्यमेव शक्तिनियामक मवसीयते। तदिह भावनायाः प्राधान्यपक्षे तदपेक्षितयोः गुणभूतयोः कर्तृकर्मणो राक्षेपेणैव बोधोपपत्ते र्नातिरिक्तशक्तिकल्पनावसरः। अत एव यत्र व्यभिचारान्नाक्षेपकत्वशक्तिः, यथैकत्वादौ, तत्रानेक शक्तिकल्पनमपि। यदितु तयोरेव प्राधान्यं तत स्तयोरेव शक्यत्वापत्ते र्भावनाया श्च गुणभूताया स्ताभ्यामेवाक्षेपसम्भवा न्न तस्या वाच्यत्वं युज्यते। अत एव कृदन्तपक्षे पाकः पक्तमित्यादौ पचिधातोः पाकमात्रवाचित्वेपि प्रत्ययस्य कृतिकर्त्रादि रूपानेकार्थबोधकस्य क्व शक्तिरिति नियामकापेक्षायां सत्वप्रधानानि नामानीति सत्वरूपस्य कर्त्रादेरेव प्राधान्यावगमात् तत्र शक्तावधारितायां गुणभूतायाः कृते राक्षेपेणैव बोधोपपत्ते र्नातिरिक्तशक्तिकल्पनम्। नचैवं तस्या मशाब्दत्वेन पाकादिरूपकारकान्वयानापत्तिः, आख्याते एकत्वान्वयार्थ कर्तृकर्मणोरिव कृदन्तपक्षे कारकान्वयार्थ कृते र्लक्षणांगीकारात्। नचैवमपि लाघवात् कृतावेव शक्ति रस्तु, लाघवस्याप्यंगनिष्ठस्य दीक्षणीया मुख्यत्वस्येवांग गुणविरोधन्यायेन अकिंचित्करत्वात्, प्रधानस्य पुरस्स्फूर्तिकत्वेन तत्र शक्ता ववधारिताया मनवच्छिन्नाया श्शक्ते स्यांगा दवच्छेदकापेक्षायां तद्गत गौरवादे रुत्तरकाल प्रतीतिकत्वेन फलमुखत्वाच्च।

अतएवानेकार्थं प्रतिपादकेपि घटादिपदे यत्रान्यतरार्थं प्राधान्य नियामकाभाव स्तत्रैव लाघवस्या कृत्यधिकरण व्युत्पादितस्य नियामकत्वम् । नहि घट घटत्वयोः प्राधान्यनियामकं किञ्चिदस्ति, पूर्वोक्तविधयो भयोरपि साक्षभूतत्वेन स्फूर्तेर नियामकत्वा दुभयोरपि क्रमिकत्वेन बोधद्वयाङ्गीकारेण वैशिष्ट्यानवगाहनात् प्रतीतेरप्य नियामकत्वाच्च । कृत्सु तु पूर्वोक्तविधया प्राधान्यस्यैव नियामकत्वादुक्ता कर्त्रादिशक्तिः, नतु कृतौ । भावकृत्सु तु पाकइत्यादौ पाकपदमात्रेण कृतिप्रतीतौ पाकः क्रियत इति पृथक्कृति वाचकपद समभि व्याहारानुपपत्ते र्धात्वर्थ मात्र प्रतीतावपि कारकान्वयार्थं कर्त्तरोदनस्य पाकइत्यादावपि जायते क्रियत इति वा क्रियापदाध्याहारेण वाक्यपूरणं द्रष्टव्यम् । युक्तश्चैतत्, धात्वर्थस्यापि स्वजनकीभूत व्यापाराक्षेपकत्व सम्बन्धात् । अतः कृदन्तस्थले कृतिप्राधान्याभावात् प्रथमान्तस्य तिङन्तस्थलेपि भाव प्राधान्याभावे अवाच्यत्वापत्तिः । नचेष्टापत्तिः, भावप्राधान्यबोधक स्मृतिविरोधापत्ते रुक्तत्वात् ।

क्रियाप्रधानमते निपातोपसर्ग प्रातिपदिकातिरिक्त शब्दगम्यो य स्तु सुपास्लिङ्गसंख्यातिरिक्तोर्थः तत्तत्कारकशाब्दबुद्धित्वावच्छिन्नप्रति लिङ्गानन्यविभावनाविशिष्यतासम्बन्धेन पदजन्योपस्थितिः कारणमिति एकयैव व्युत्पत्त्या बहूनां संग्रहाल्लाघवं । अन्यथाहि तत्तत्कारकादीनां धात्वर्थे तस्य च कालादीनां च भावनायां तस्याश्च संख्यायाञ्च प्रथमान्त इत्यनेकव्युत्पत्तिकल्पनागौरवम् ।

अत्रच कार्यतावच्छेदके निपातोपसर्गाणां समभिव्याहृतार्थान्वयं विना स्वार्थाबोधकत्वा दाद्यं विशेषणम् ।

अतएव तेषु क्रियासमभिव्याहारेसति तयैवान्वयः, यथानिर्देषेषु प्रघः, अन्यसमभिव्याहारे त्वन्येनापि । प्रातिपदिकार्थस्यापि घटपदादौ स्तुपर्यं प्रायेवान्वयात् द्वितीयम् ।

यत्तु दधीत्यादौ सुब्लोपः तत्र प्रातिपदिकान्वयस्यैव दधिकर्मत्वादेर्व्युत्पत्त्यन्तरेणैव भावनान्वयेपि नक्षतिः । अत्रचाग्नेयोष्टाकपाल इत्यादौ तद्धितोपात्तस्य देवतारूपस्य कारकस्य तद्धितोपात्तद्रव्यान्वयविनापि क्रियान्वयिनः प्रातिपदिकार्थत्वेपि व्युत्पत्त्यन्तरेण तदङ्गीकारान्नोक्तव्युत्पत्तिभङ्गः । अतएव कारकत्वातिरिक्तसम्बन्धेन यत्र तद्धितसमासादिवृत्ति यथा उपगवः राजपुरुषइत्यादौ तत्र क्रियान्वयाभावेपि पुरुषादावन्वयोनानिष्टः ।

यत्तु कारकत्वसम्बन्धेन वृत्तिः यथा आग्नेयइत्यादौ तत्र प्राथमिकक्रियान्वयं विना कारकत्वायोगात् वृत्तेश्च पाष्ठिकसम्बन्धेनापि निर्वाहोपपत्तेः नाग्नावेवाष्टाकपालसम्बन्धोपि तु भावनासम्बन्धद्वारक एवासौ । विवरिष्यते चैतत्पौर्णमास्यधिकरणे वाक्यभेदोपपादनार्थं । सुबुपात्तलिङ्गवचनयोस्तुवर्थकरणत्वाद्यन्वयित्वं उक्तविधशब्दगम्यत्वात्तन्निवृत्त्यर्थं तृतीयम् । प्रथमान्तस्यकेवलप्रातिपदिकार्थस्यापि प्रथमयोपस्थितस्यैवान्वयाङ्गीकारान्नातिप्रसङ्गः ।

एवं षष्ठ्यादीनामपि कारकत्वातिरिक्तेनापि सम्बन्धेन निमित्तवद्भावनान्वयाङ्गीकाराद्नतिप्रसङ्गो निराकर्तव्यः ।

अयंपद च पदजन्योपस्थितिविशेष्यपरं । तेन यागादेः करणत्वान्वयिनो भावनानन्वयेपि न क्षतिः । कारणतावच्छेदकेपि कारकाणां भावनापदोपस्थापितभावनान्वयापत्तेस्तद्व्यावृत्त्यर्थं क्रियानन्वयीति विशेषणं । अत एवोदनं भुक्त्वा व्रजतीत्यादौ क्त्वाप्रत्ययोपात्तभावनाया ओदनादिसम्बन्धेपि तस्याक्रियानन्वयित्वात् नोक्तव्युत्पत्तिविघातः । नचैवमेकस्मिन् वाक्ये भावनाद्वयसत्त्वात् कस्यां केषां कारकाणामन्वय इत्यत्रापि नियामकाभावः , योग्यताया आसत्तेस्तात्पर्यस्य च नियामकत्वात् । एवं गच्छतीत्यादौ प्रत्ययार्थस्यापि शबादिविकरणार्थभूतायामेव तस्यामन्वयः । तस्मादेकयैव व्युत्पत्त्या बहूनां सङ्ग्रहाल्लाघवम् । अस्तु वा प्रकारीभूत तत्तदर्थभेदेन व्युत्पत्तिभेदः । तथापि परिपूर्णं पदपदान्तरेणान्वेतीति न्यायेन प्रथमावगतयागादिव्युत्पत्तिवेलाया भावना

विशेष्यतावच्छेदकस्य उपस्थितत्वेन तत्रैव विशेषणज्ञानरूपसामग्रीसत्त्वात् स्वर्गादिपदार्थान्तराणामपि प्रकारतया नान्वयव्युत्पत्तिकल्पना, नापन्यत्र, अन्यगतमुख्यविशेष्यतावस्थानुपस्थितत्वेन विशेषणज्ञानाभावात् । अत एवविधव्यापका इति भावनायामेव साक्षात्परम्परया वा योग्यतानुसारेण सर्वेषामन्वयः । परम्परासम्बन्धस्थलेतु पार्ष्ठिको धात्वर्थादिसम्बन्ध इति न कोऽपि दोषः । नच पार्ष्ठिकबोधस्यापि श्रुतशब्दजन्यत्वाद्व्युत्पत्त्यन्तरकल्पनातादवस्थ्यम् , पार्ष्ठिकबोधस्य योग्यतावशसमस्तपदकल्पनया अनुमितपदजन्यत्वेन व्युत्पत्त्यन्तरकल्पनानापत्तेः । निरुक्तपदाध्याहार प्रतिश्रुतशब्दस्य कारणत्वन्तु तथापि सम्मतमेव । इतरथा अय घटोऽस्ति जलं मानेय मित्यत्रो घटकरणकजलानयन मित्येवं विधार्थप्रतिपादकपदाध्याहारानापत्तेः । पदान्तरकल्पनाकृतन्तु गौरवं कार्यकारणभावकल्पनाभावात् फलमुखत्वा च न दोष मावहति । तथाप्याकांक्षायोग्यता तात्पर्यादिवशात् तत्तत्पदार्थ एव पार्ष्ठिकान्वय स्तत्तत्पदार्थस्येति नाव्यवस्थापि । स्पष्ट श्चाय मर्थो भावार्थाधिकरणादौ तत्र तत्र ।

नचैवं राजपुरुषो स्तीत्यत्र क्रियान्वयोत्तरं पार्ष्ठिकस्तात्पर्यादिसत्त्वे राजपुरुषयो स्स्वस्वामिभावादिरूपो भेदसम्बन्धोपि बुध्येतेति वाच्यम् , अनुभवानुरोधेन नामप्रयोज्य तद्धर्मप्रकारक तद्धर्मविशेष्यकान्वयबोधस्या भेदविषयत्वमिति नियमांगीकारात् । राजपुरुषयोः पार्ष्ठिकान्वयबोधस्या प्यस्मन्मते नामजन्यत्वाभावेपि स्वजन्यशाब्दबोध अनुमेयशब्दजन्यत्वेन नामप्रयोज्यत्वमस्तीतिप्युक्तम् तस्या भेदविषयत्वम् । वर च नामार्थयो स्तदभेदान्वयव्युत्पत्तिकल्पनापेक्षया निरुक्त व्युत्पत्तिकल्पनं, प्रयोज्यत्वस्य जन्यत्वापेक्षया लघुत्वात् ।

राज्ञः पुरुषोऽस्तीत्यादौ तु षष्ठ्यर्थनामार्थयो रन्वयस्य पार्ष्ठिकत्वा त्राभेदविषयत्वप्रसङ्गः । अत एव तत्राभेदस्य बाधितत्वादेव षष्ठ्य

र्थो नाभेदसम्बन्धेन पुरुषेनेति, अपितु भेदसंसर्गेणैव । अभेदभ्रम दशाया पर तादृशवाक्या त्पाष्ठिकाभेदबोधवारणार्थं सुप्रयोज्य तदर्थ प्रकारक नामार्थविशेष्यकबोधस्य भेदसंसर्गविषयत्वम् , स्तोक पचतीत्यादौ अभेद ब्राधार्थ च सुप्रयोज्य तदर्थप्रकारक धात्वर्थविशे ष्यकबोधस्या भेदविषयत्वम् , दधि पश्यतीत्यादौ भेदसंसर्गबोधार्थ च शुद्धप्रातिपदिकप्रयोज्य तदर्थप्रकारक धात्वर्थविशेष्यकबोधस्य भेदविषयत्व, मित्याद्यनुभवानुसारेण वक्तव्यम् ।

नचैवविधव्युत्पत्तिकल्पनापेक्षयाऽभावे किमिति शाब्दबोधविषयत्व मेव परेषा मिव नाङ्गीक्रियत इति वाच्य संसर्गविशेषनियामक व्युत्पत्तीनां तुल्यत्वेपि तत्तद्विशेष्यतानिरूपितप्रकारतानियामकव्युत्प त्तीनां भेदाभावेन अस्मन्मतस्य लघुत्वात् ।

नच भवन्मतेपि पाष्ठिकान्वयप्रकारतानियमार्थं तत्ताकल्पनावश्य भावः, इतरथा सोम प्रति यागस्यारुण्य प्रत्येकहायन्या वा प्रकारता पत्ते रिति वाच्य, यस्य पद्धोपाध्यवहितपूर्वयाधे साक्षात्सम्बन्धेन विशेष्ये प्रकारता तस्य निराकाङ्क्षत्वादेव तदुत्तरबोधेन्य प्रत्य प्रकारत्वात् ।

अत एव यस्य पद्धोपाध्यवहितपूर्वबोधे परम्परासम्बन्धेन विशेष्ये प्रकारता तस्यैव परम्पराघटकतावगत्यै तदुत्तरबोधेन्य प्रायवि]प्रकारत्व यागेनेष्टापत्यादे हि स्वर्गाय प्रति द्वितीयबाधे साक्षादेव प्रकारत्वा च तृतीयबोधे सोमारुण्ये प्रति प्रकारता । अपितु सोमारुण्ययोरेव परम्परया भावना रूप प्रतिच प्रकारयो परम्पराघटकत्वावगतये याग मेवद्वारनी या प्रति प्रकारत्व, तयोश्च तद्बलादेव विशेष्यत्वम् । इत रथा सोमारुण्याद्गित परम्परासम्बन्धानिर्वाहात । अत एव यस्य प्रकारस्य विशेष्यान्वये यो वस्तुत परम्परासम्बन्धरूप तस्यैव तत्वे नावगत्यै तद्रूपटकपदार्थेन पाष्ठिकोन्वय शब्देनावगम्यते, नतु यौगपद्येन । अत एव राज पुरुषोस्तीत्यत्र प्रातिपदिकार्थ

त्वा तद्धातोरकर्मकत्वाङ्गीकारात् । पार्ष्ठिकान्वयलभ्य धात्वर्थ कर्मत्वमादायैव चोदनादौ द्वितीयोत्पत्तिः, नतु भावनाकर्मत्वमादाय । अन्यथा स्वास्यचंशयीतेत्यपि प्रयोगापत्तेः । पार्ष्ठिकान्वयलभ्य सकर्मकत्वादि व्यवहारवदेव स्तोकं पचतीत्यादौ क्रियाविशेषणानामपि भावनारूपक्रिया सम्बन्धोत्तरकाललभ्यो धात्वर्थेनाभेदान्वयो द्रष्टव्यः ।

तस्मात्सिद्धा धात्वर्थातिरेकिणी प्रत्ययवाच्या मुख्यविशेष्या प्रयत्नरूपा भावनेति ।

तत्र च पूर्वोक्तन्यायेन कर्माकाङ्क्षया द्वितीयसमभिव्याहाराच्च तस्यां स्वर्गकामाधिकरणन्यायेनेप्सित जन्य स्वर्गादिभाव्यत्वेनान्वेति, भावार्थाधिकरणन्यायेनच यागादिः करणत्वेन । नच तस्य यत्नरूपभावना जन्यत्वात्कथं तस्यामेव करणत्वमिति वाच्यं, भावनाफलजनकत्वेन पारिभाषिकस्यैव भावनाकरणत्वस्याङ्गीकारात् । तस्याश्च स्वजन्य करणेन फले जन्यमाने तूपकारकापेक्षायां प्रकरणाधिकरणन्यायेन प्रयाजादौ तिकर्तव्यतात्वेनान्वीयते । अतएव निर्व्यापारस्य द्रव्यस्या ह्युपकारकत्वायोगात् व्यापारानाविष्टं द्रव्यमपि नेतिकर्तव्यतात्वेन ज्ञायते, व्यापारसम्बन्धोत्तरन्तु तस्येतिकर्तव्यतात्वेन बोध इत्यपि तत्र तत्र वक्तव्यं भविष्यति ।

पार्थसारथिमतेतु व्यापारसामान्यस्यैव भावनात्वात् प्रयाजादीनांच तद्विशेषाणां व्यापारविशेषाकाङ्क्षारूपेतिकर्तव्यताकाङ्क्षया तत्त्वेनान्वयो नाप्युपकारकत्वेन । अतएव व्यापारानाविष्टस्य द्रव्यस्य तद्विशेषत्वायोगात्तत्त्वेन ग्रहणमिति विशेषोपि प्रकरणाधिकरणे निरूपयिष्यते । नचैव भावनायां साध्यसाधनेति कर्तव्यतान्वयेपि समानप्रत्ययोपादानमुख्या शुद्धायामेव तस्यां विध्यन्वयात्तदुत्तरकालीनस्य तदंशत्रयस्य विधिसंस्पर्शाभावेन प्रहेत्वरवदविधेयतापत्तिः; अंशत्रयान्वयोत्तर तद्विशिष्टायां भावनायां विधिसम्बन्धाभ्युपगमेन पदपर्यवसानोपपत्तेः, पश्चा

निर्धारणायां विध्यन्वयाभ्युपगमे तु परिपूर्णं पदं पदान्तरेणान्वेतीति न्यायभंगापत्तिरिति वाच्यम् । शुद्धस्य यत्नस्य विधिविषयत्वानुपपत्तेः । सामान्यतो यत्किंचिदाक्षिप्तांशत्रयोपेतभावनाया विधिसम्बन्धाभ्युपगमेनच पर्यवसानोपपत्तेः । पश्चान्निर्धारणापेक्षायां तत्तत्पदैर्विशेषनिर्धारणोपपत्तेः ।

तस्मात्सिद्धांशत्रयान्विता प्रत्ययवाच्या भावना । अतश्च तस्य धात्वर्थस्यैव करणत्वं क्षिप्रमवगतमिति पार्ष्ठिकफलसम्बन्धवेळायां तस्यैवान्वयो न तु द्रव्यादेरिति सिद्धं । अतश्च फलसम्बन्धनिर्वाहार्थं कल्प्यमान मपूर्वमपि तज्जन्यमेवेत्यपि सिद्धम् ।

द्रव्यत्यागाद्धुतवहमुखक्षेपणाच्चातिश ( क्ता ) स्ता
निष्प्रत्यूहं विधिपरिचिता भावनेयं चकास्ति ।
यस्याः स्वर्गाद्यतिशयफलमपि यागाद्विजातं
तामत्राहं मुरारिपदद्वन्द्वपद्मेऽर्पयामि ॥

॥ इति भावार्थाधिकरणम् ॥ १ ॥

( अपूर्वस्य स्यात्प्रतिपादकत्वाधिकरणम् । )

## ॥ अथ अपूर्वाधिकरणम् ॥

॥ १ ॥ सू – चोदनापुनरारम्भ ॥ २ - १ - ६ ॥

एवं तावदपूर्वं सिद्धं गृहीत्(क्)त्वा तज्जनकं विचारितं । तत्सद्भाव एव त्वधुना विचार्यते – किमस्त्यपूर्वं उत नेति । अत्र चापूर्वसद्भावस्यापूर्वनैदोपयोगित्वात्पादाध्यायसंगती पूर्ववदेव । आक्षेपिकी त्वनन्तरा ।

तत्र प्रमाणाभावान्नापूर्वमस्ति । तथाहि, न तावदत्र प्रत्यक्षादिकं प्रवर्तते, याग स्वर्गसाध्यसाधनभावस्येव पूर्वेऽपि तस्याप्रवृत्तेः । नापि शब्दः, तदनुपलम्भात् । न च श्रुतयागस्वर्गसाध्यसाधनभावान्यथानुपपत्तिरेव तत्कल्पिका, न ह्यन्यथा क्षणिकस्य यागस्य कालान्तरभावि स्वर्गसाधनत्वमुपपद्यते, अत प्रमाणान्तराभावेऽपि श्रुतार्थापत्तिरेवापूर्वसद्भावे प्रमाण

मितिवाच्यम् , साध्यसाधनभावस्यान्यथानुपपत्तावपि अपूर्वस्य तदुपपादकाभावात कल्पनानुपपत्ते. । नह्यपूर्वेऽकल्पिते तेनैव स्वर्गजननादपूर्वोत्पत्तिं प्रति अन्यथासिद्धस्य यागस्य स्वर्गजनकता सम्भवति । नच अपूर्वस्य शक्तिरूपत्वा दवान्तरव्यापारत्वाद्वा ज्वालादिभिरिवनतेन यागस्यान्यथासिद्धिः, शक्तिव्यापारयो श्शक्तिमद्व्यापारवन्निष्ठत्वनियमेन शक्तिमति व्यापारवतिच यागे नष्टे शक्तिव्यापारयोरवस्थानानुपपत्ते. ।

नच अपूर्वस्य फलवलकल्प्यस्य यागनिष्ठत्वासम्भवेपि यागाश्रयभूतात्मनिष्ठत्वकल्पनेनापि शक्तिव्यापारत्वोपपत्तिरितिवाच्यम् , गुरुभूतापूर्वकल्पना विनापि यागस्वर्गसाध्यसाधनभावस्योपपन्नतरत्वेनेतादृशकल्पनायां प्रमाणाभावात ।

तथाहि – यद्यपि तावत क्षणिको याग स्साक्षादेव कालान्तरभाविस्वर्गजननाय नालं । तथापि स्वजन्य स्व-सद्वारा समर्थएव। तस्यहि यागजन्यत्व सद्भावयोः कल्पनत्वात येव क फलजनकत्वमात्र कल्प्यमितियागान्तरव्यापारत्व सुलभम् । अपूर्वस्यतु सद्भावस्यापिच यागजन्यत्व स्वर्गजनकत्व चेत्यनेकपदार्थकल्पनान्न तासुलभम् । यागस्यविनाशित्व प्रतिबन्धानोत्तरत्वाल्मेव न्व द्वारकल्पनेन विनाशस्य उपस्थितत्वाच्च ।

नन्वेव ध्वंसस्यैव व्यापारत्वे तस्य नित्यत्वेन कीर्तनप्रायश्चित्तादिना नाशानुपपत्ते " धर्मः क्षरति कीर्तनात " ' प्रायश्चित्तैर्नश्यन्ति पापानि सुमहान्त्यपी ' त्यादिशास्त्रविरोध, नह्यनयोः ज्योतिष्टोमब्रह्महत्यानाशकत्वसम्भव., तयोराशुतरविनाशित्वेन नाशकारणानपेक्षत्वात । नापि तज्जन्यसुखदु.खनाशकत्व, तयोरनुत्पन्नत्वेन नाशायोग्यत्वात् । अत' कीर्तनप्रायश्चित्तादिनाश्यं यागादिजन्यमपूर्वमावश्यकमितिचेत् ? कल्प्यध्वंसस्यैव व्यापारत्वे ऽवधारिते कीर्तनादीनां फलोत्पत्तिप्रतिबन्धकत्वस्यैव स्वजन्यध्वंसद्वारा साक्षादेवा कल्पनात ।

अतएव यागध्वंसस्य नित्यत्वेन स्वर्गोत्पत्त्यनन्तरमपि स्वर्गान्तरोत्पत्ति प्रसंग इत्यप्यपास्तम्, स्वर्गध्वंसस्यापि तत्प्रतिबन्धकत्व कल्पनात् । नच कीर्तनादिध्वंसस्य प्रतिबन्धकत्वकल्पने प्रयोगान्तर जन्यस्यापि फलस्य प्रतिबन्धापत्तिः, तद्यागव्यक्तिकीर्तनजन्यध्वंसस्य तद्यागव्यक्तिजन्यफलप्रतिबन्धकत्वकल्पनात् । नचैवं गौरवापत्तिः, तस्य फलमुखत्वात्; अपूर्वपक्षेपि समानत्वाच्च ।

अथवा न कीर्तन ध्वंसस्य प्रतिबन्धकत्वं कल्प्यते, गौरवात्, अपितु कीर्तनात्यन्ताभाव विशिष्टज्योतिष्टोमव्यक्तित्वेन कारणत्वकल्पना स च कीर्तनस्थले यागध्वंसमात्रात् फलसिद्धिः । अत्र च तद्व्यक्तित्वावान्त स्वरूपं विवक्षणीयम्, अन्यथा एकव्यक्तिकीर्तने व्यक्त्यन्तरेऽपि फलानिष्पत्ति प्रसंगात् । नच कीर्तनवाक्ये कीर्तनमात्रश्रवणात् ज्योतिष्टोमवाक्ये च तन्मात्रश्रवणात् उक्तविधकारणतावच्छेदकबोधकाभावः, तस्य वाक्यैक वाक्यतोत्तरमनुमानविधया बोधोपपत्तेः । नहि ज्योतिष्टोमादिवाक्येपि ज्योतिष्टोमत्वादि रूपस्य कारणतावच्छेदकस्य वाक्येनबोधः, कार्यतावच्छेदकबोधविना कारणतावच्छेदक बोधानुपपत्तेः । नह्यत्र स्वर्गत्वं कार्यतावच्छेदकं, अपितु विजातीयस्वर्गत्वम् । नच वैजात्यस्य वाचकं पदमत्रास्ति । स्वर्गपदेनैव तल्लक्षणायां प्रमाणाभावात् । अतो वाक्येन सामानाधिकरण्येनैव जन्यजनकभावे बोधिते पश्चादेवानुमानविधया विजातीयस्वर्गत्वस्य कार्यतावच्छेदकत्वे कल्पिते पश्चादेव ज्योतिष्टोमत्वादेरुक्तविधस्यापि कारणतावच्छेदकस्य कल्पयितुं शक्यत्वात् । अतो युक्तं ध्वंसस्यैव व्यापारत्वं नतु कल्पस्यापूर्वस्य । एतेन "तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति" इत्यर्थवादोपात्तस्य देवताप्रसादस्यैव रात्रिसत्रस्यापि न द्वारत्वोपपत्ते नानुपस्थितापूर्वकल्पनं युक्तमिति वेदान्ति मतमपि प्रयुक्तम्, यतोऽनुपस्थितस्य ध्वंसद्वारकत्वेनैव नैराकांक्ष्ये रात्रि सत्रन्यायानवतारात् । देवताप्रसादस्यापीच्छाविशेषरूपस्य क्षणिकत्वेन

व्यापारान्तरापेक्षणाच्च । तस्य ध्वंसद्वारकत्वांगीकारे च तस्यान्तर्ग डुकत्वापत्तेः वरं यागध्वंसस्यैव व्यापारत्वंकल्पनम् ।

नच ध्वंसस्य फलकारणत्वे यागस्य कारणीभूताभाव प्रतियोगित्वेन प्रतिबन्धकत्वा पत्तिः ? यस्मिन्नभावे संसर्गाभावत्वेन कारणता तादृशाभाव प्रतियोगित्वस्यैव प्रतिबन्धकत्वांगीकारात् । प्रकृते तु ध्वंसत्वेन कारणता, नतु संसर्गाभावत्वेनेत्यदोषः ।

नच ध्वंसस्याभाव रूपत्वात् कथं फलजनकत्वं, अभावस्य क्वापि कारणत्वादर्शनादिति वाच्यम्; अभावस्यापि कारणत्वांगीकारे बाध काभावात् । अतएवानुपलब्धे रभावरूपाया एव घटाद्यभाव ग्राहक त्वमंगीकृतम् । एवं सन्ध्यावन्दनाद्यभावस्य च प्रत्यवायजनकत्वम् ।

यत्तु वार्तिके " नैवाभावस्य क्वचिदपि कारणत्वं दृष्टं, यदितु सन्ध्यावन्दनादौ क्वचिदुद्भाव्येत ततो निमेषादिरूपस्य तत् कालक्रियमाणस्य भावस्यैव कारणत्वकल्पना दुष्प्रयोजक " मित्युक्तम्, यच्च न्यायसुधाकृता " अभावस्य कारणत्वेपि भावसहकृतस्यैव तस्य कारणता - नशुद्धस्य- क्वचिदपि तथा अदर्शनात्, सन्ध्यावन्दनाकरण स्यापि च विध्यग्रहणरूपभावान्तरसहकृतस्यैव प्रत्यवायजनकत्वादि " त्युक्तं, तदतिशयार्थं, शुद्धस्याभावस्यापि कारणत्वांगीकारे बाधकाभा वात् । अतो भावस्यापि कारणत्वांगीकारायुक्तं ध्वंसस्यापि द्वारत्वम् ।

यत्तु- वार्तिके यागध्वंसविशिष्टादात्मनएव फलोत्पत्त्युपपत्तेर्नापूर्वक ल्पनायुक्तेति पक्षान्तरमुपन्यस्तं, तदात्मनोनित्यत्वेन अवान्तरव्यापारवा योगा द्विशिष्टस्य व्यापारत्वांगीकारेपि वा लाघवेन ध्वंसस्यैव व्यापारतोप पत्ते रात्मनोपि व्यापारान्तः प्रवेशे गौरवादुपेक्षितं । सर्वथानास्त्यपूर्वमिति प्राप्ते-

अभिधीयते, फलन्तावत् प्रधानकालान्तरभावीति निर्विवादम्, नहि " यन्न दुःखेन " इत्यादि वाक्यशेषावगत निरतिशयसु

सदुःखरूपयोः स्वर्गनरकयोः यस्मिन् जन्मन्युपभोगः सम्भवति; विहितस्यापि वृष्टिपश्वादेः साङ्गप्रधानजन्यस्य न प्रधानमात्रोत्तर मुत्पत्तिसम्भवः, अतः कालान्तरभाविफलोत्पत्तिर्न क्षणिकात् कर्मणो व्यापार मन्तरेण सम्भवतीति व्यापारापेक्षायां न तावद् ध्वंसस्य व्यापारत्वं सम्भवति, स एवहि व्यापारः कल्पनीयो यः श्रुताविरोधी तदिह यथैव निरतिशयसुखरूपे स्वर्गाख्यफले श्रुते तस्येह जन्मन्यसम्भवेपि जन्मान्तरीयत्वमेव कल्प्यते नतु पुत्राद्यपेक्षयापेक्षिकं निरतिशयत्व मादाय सार्वभौमत्वादिकं गृह्यते- स्वर्गशब्दस्यौपचारिकत्वांगीकरणे कारणाभावात् , जन्मान्तरीयत्वकल्पनस्य च फलमुखत्वेनादोषत्वात् , तद्वदिहापि धर्मः क्षरति कीर्तनात् प्रायश्चित्तेन नश्यन्ति पापानि सुमहान्त्यपि इति कीर्तनप्रायश्चित्तादीनां नाशकत्वश्रवणान्नाशार्थं किञ्चिदवश्यं कल्पनीयम् ।

नच याग स्वध्वंस स्वरफलं वा सम्भवति, नच नाशशब्दस्य फलोत्पत्तिप्रतिबन्धे कारणीभूतावच्छेदक घटकीभूतात्यन्ताभावे वा लक्षणेति वाच्यम् , लक्षणायां प्रमाणाभावात् । अत एव कल्पनार्थंतद्वारकत्वकल्पनापेक्षया ऽपूर्वकल्पनस्य गुरुभूतत्वेपि तस्य फलमुखत्वा दवश्यं प्रायश्चित्तादिनाश्य मपूर्व मेव कल्प्य । तेन यथैव निषादस्थपतिपदे लक्षणापादकसमासानंगीकरणेन श्रौतकर्मधारयमेव अंगीकृत्य पश्चा दापद्यमानं विद्या तदुपायाक्षेपकत्वं फलमुखतया दंगीकृतं, तथैव नाशपदस्य श्रौतार्थोक्तिप्रत्ययाऽपूर्व मंगीकर्तव्यमेव ।

किञ्च कीर्तनादेः फलप्रतिबन्धकत्वांगीकारे तावत् प्रतिबध्यतावच्छेदकस्य तद्व्यक्तित्वस्या प्रसिद्धत्वादेवानुपपत्तेः, विजातीय स्वर्गत्वादिना प्रतिबध्यत्वांगीकारे च प्रयोगान्तरतोपि फलानापत्तिप्रसंगः । कीर्तनात्यन्ताभावविशिष्ट ज्योतिष्टोमव्यक्तित्वेन कारणतांगीकारे गौरवं, अनेककार्यकारणभावकल्पनापत्तिश्च । अस्मन्मते

सत्यपि तत्कीर्तनाद्येन तद्व्यक्तिजन्या पूर्वनाशत्वेन कार्यकारण भावानेकत्वे कारणतावच्छेदके गौरवाभावात् धर्मः क्षरति कीर्तना दिति शास्त्रोक्तत्वेन प्रामाणिकत्वा च न दोष ।

किंच ध्वंसस्य प्रधानव्यापारत्वे तुल्यन्यायतया दैवेष्वपि स एव व्यापारोंगीकर्तव्यः,ततश्च तस्य नित्यत्वा द्विकृतिप्रयोगवेळायामपि सत्वा द्विकृतौ पशुपुरोडाशप्रयोगसमिकत्वोपपत्तेः प्रयोग[गा]भेदेपि तज्जन्यस्यो पकारस्य एकत्वा न्न पृथगंगानि कर्तव्यानि स्यु. । तथाच विकृतौ प्रयाजे कृष्णळ जुहोतीति दर्शनानुपपत्तिः । अस्मन्मते त्वंगा पूर्वाणां प्रधाना पूर्वोत्पत्त्यनन्तरं नाशा द्विकृत्य पूर्वसिद्धयर्थं पुन रंगकरणोपपत्ति. । अपि च अस्मिन् पक्षे अंगाना मुपयोग ? न तावत्प्रधाने, तस्य प्रयाजाद्यजन्यत्वात् । नापि तद्ध्वंसे, तस्य हानि विनापि जायमानत्वात् । नापि फले, प्रधानत्वापत्तेः । अतोवश्य मंगप्रधानव्यवस्थासिद्धयर्थ मप्यपूर्वं कल्पनीयम् । तथाहि-प्रधा नेनापूर्वे जननीये अंगानामपि सहकारित्वकल्पनात् प्रधानएववा योग्यता विशेषजनना दस्ति तेषामुपयोगः । तस्माद्ध्वयं यागस्य स्वसातिरिक्तो व्यापारो वाच्यः । नच यागस्यैव तर्हि फलं यावत्स्थायित्व लाघवा दस्तु, किं व्यापारकल्पनयेति वाच्यम् , तृतीयादिक्षणे प्रत्यक्षतापत्तेः । तद्यागव्यक्तिप्रत्यक्षे तद्यागव्यक्ति द्वितीयक्षणस्य कारणत्वकल्पने चा नन्तकार्यकारणभाव कल्पनापत्ते । नचैतस्य फलमुखत्व, विषय प्रत्यक्षयोः कार्यकारणभावस्य लोकसिद्धत्वेन स्वर्गसाधनत्व ज्ञानान पेक्षत्वात् । कीर्तनापूर्वध्वंसयो नौश्यनाशकभावानेकत्व कल्पनात्तु धर्मं क्षरतीति शाब्दबोधोत्तरकालीनतया फलमुखेति विशेषः । अतोवश्य व्या पारोवाच्य । सोपिच न देवताप्रसादरूप., तस्य देवतानिष्ठत्वेन फल व्यधिकरणस्य फलजनकत्वानुपपत्ते । देवताया अचेतन्य विग्रहः प्रसादस्तस्य च स्थायित्वमित्यनेकार्थं कल्पनापत्तेश्च । विशिष्यचा य नवमे निराकरिष्यते । अतः परिशेषादपूर्वमेव कल्प्यम् । तच्च

यागेनापूर्वं कृत्वा स्वर्गं कुर्यादिति श्रुतार्थापत्तिकल्पित वैदिकशब्दग-म्यत्वादेव नाप्रामाणिकं। नचैवं श्रुत यागस्वर्ग साध्यसाधनभावव्याघातः, अपूर्वस्य शक्तिरूपत्वेन व्यापाररूपत्वेन वा कल्प्यमानत्वा च्छक्तिव व्यापारवतांच ज्वालादिवच्छक्तिमत्वो व्यापारवत्वोवा साधनत्वा विघातात् ।

नचैव शक्तिमति व्यापारवतिवा यागेनष्टे तन्निष्ठापूर्वस्यापि नाशाप त्तिः, अपूर्वस्य यागीयत्वेपि फलवत्त्वकल्प्यत्वेन यागनिष्ठत्वाकल्पनात् , यथैव ह्यनुभवव्यापारस्यापि संस्कारस्य नानुभवनिष्ठत्व किन्तु फलब-लेन स्मृति समानाधिकरणत्वसिद्ध्यर्थं मात्मनिष्ठत्वमेव, तथात्रापि अपूर्वस्यापि फलसामानाधिकरण्यसिद्ध्यर्थं फलबलेन फलभोक्तृनिष्ठत्व मेव कल्प्यतइति न विरोधः । अतएव गयाश्राद्धादौ यत्रपितुः पुत्रस्य च फलभोक्तृत्वं शास्त्रान्तरप्रमितं तत्रोभयनिष्ठा पूर्वद्वयकल्पनं । अपूर्व द्वयमपि च तत्र कीर्तननाश्यमेव । एवं दम्पत्योरुभयोरपि भोक्तृत्वादुभ-यनिष्ठमपूर्वद्वय, तथापि तत्त मिष्टकीर्तनस्यैव तत्त न्निष्ठापूर्वनाशकत्वम् ।

यद्वे तरस्यैव रोगादिनिवृत्त्यर्थं दर्शपूर्णमासाद्यनुष्ठानं तत्र स्वापयीत रस्य व्याप्तज्यनुतिकर्तृत्वे फलभोक्तृत्वाभावात्र तन्निष्ठापूर्वान्तरकल्पन, अपितु भोक्तृनिष्ठमेव। अत एव यवेतरस्य सत्यपि कर्तृत्वे फलभोक्तृत्वाभा वात्र फलिसंस्कारावपनादयः। एव जातेष्ट्यादौ पुत्रस्यैव फलभोक्तृत्व,नतु पितुस्तत्रापूर्वं फलिसंस्कारोवा। याज्ञिकास्तु विपर्ययेपि फलिसंस्कारानुष्ठाति च्छन्त्येव । नचैवं पुत्रस्य भोक्तृत्ववत्तत्र फलसंस्कारा अप्यपूर्ववदभ्यु पगम्येरन्निति वाच्यम् , वपनादीनां कर्तृनिष्ठ फलाधानयोग्यताजननार्थत्वा त्पुत्रस्यकर्तृत्वाभावेन वपनादिप्राप्त्यभावात् । वपतइत्यादिपुंस्त्व आत्मने पदानुरोधेन पुरुषप्राधान्यावगते वपनादेरवघातादिवत्संस्कारत्वावगमा द्वपनेन प्रधानफलाधारत्वयोग्यतासम्पादनद्वारा पुरुषं संस्कुर्यादित्यर्था वगतेः संस्कारस्यच भूतभाव्युपयोगापेक्षायां कर्तृत्वद्वारेण यागापूर्वसं बन्धावगते स्वपूर्वजनकयागकर्तारं यागजन्यफलाधारत्व योग्यतासम्पा

दनद्वारा वपनेन संस्कुर्यादित्यर्थः प्रतीयते । अतश्च पुत्रस्य कर्तृत्वा भावा दमाकृतकार्यकारिणि तस्मिन् न वपनादिधर्मप्राप्तिः । नच स्व स्कार्यस्यापूर्वजन्यफलाश्रयत्वसंबन्धेनैवा पूर्वसम्बन्धोपपत्ते र्नावश्यं कर्तृ त्वेनैव सविवक्षणीयइतिवाच्यम् , वपतइत्यात्मनेपदेन वपनकर्तरि वप नजन्यफलोत्पत्त्यभिधाना द्वपनस्य चांगत्वेन प्रधानविधिविधेयस्य प्रधा नकर्त्रैव कर्तृनिरूपणा द्वपनवाक्ये कर्तृतासम्बन्धस्यैव शीघ्रोपस्थितिक त्वात् । विस्तरेणचायमर्थं स्तृतीये निरूपयिष्यते । तस्माज्जातेष्टिस्थ ले फलसंस्कराभावेपि पुत्रनिष्ठमेवापूर्वं नपितृनिष्ठं । तस्मिंस्तु निमित्त बला दकरणएव दुःखजनकीभूतं प्रत्यवायरूप मपूर्वमिति विशेषः । तास्विह नष्टेपि प्रधाने फलबलेनात्मनिष्ठापूर्वकल्पनम् ।

एवमंगानामपि प्रधानगतफलजननयोग्यतासम्पादनफलकानामने केषां युगपद्योग्यतासंपादकत्वानुपपत्ते र्वांतरव्यापाररूपापूर्वकल्पना प्रष्टे ष्वप्यंगेष्वात्मगतापूर्वसिद्धिः । तत्रच परंपरासंबन्धेन प्रधानगतयोग्यताया अपि स्वत्वात्फलसामानाधिकरण्यलाभः । तत्र त्वयं विशेषः-आराद्रुपका रकाणान्तावत्समिदादीनां प्रकरणाद्यवगतयागांगभावानामपि प्रधानयाग स्वरूपस्य तदजन्यायां तत्रोपयोगकल्पनानुपपत्तेः तज्जन्योत्पत्त्यपूर्वाणां च प्रधानाव्यवहितोत्पत्तिकानां प्रधानापूर्वोत्तरकालवर्तिभि रारादुप कारकै रुत्पत्त्यपूर्वा सत्राप्यनुपयोगेपि तेष्वेव तज्जन्यापूर्वजननानुकूला योग्यता जन्यते ।

नच उत्तरांगानामेव परमापूर्वजननानुकूल योग्यता संपादकत्वमस्तु, पूर्वांगानांतूत्पत्त्यनुकूल योग्यताजनकत्वमेवास्त्विति वाच्यम् ; लाघवादारा दुपकारित्वावच्छेदेनैव परमापूर्वोपयोगित्वस्य कल्पनात् । नच-उत्पत्त्यपूर्वे ष्वनुपयोगेपि प्रधानापूर्वःपरमापूर्वं जननीयंगानामपि स्वस्वाव्यवहितोत्तरद्वारा सहकारिकारणत्व मस्त्विति वाच्यम् ; तथासति फलइव परमापूर्वेपि जनक त्वाविशेषेण प्रधानतुल्यतापत्तेः । अतो योग्यतासम्पादनमेवतैरुत्पत्त्यपूर्वेषु क्रियते। योग्येश्वतैःपरमापूर्वजननमितिद्रष्टव्यम् । अतएव प्रधानापूर्वानेकाये

क्रमेण सर्वेषु तेषु तैरेवापूर्वं योग्यतासम्पादनमिति द्रष्टव्यं । अत श्चान्तिमप्रधानापूर्वनिष्ठयोग्यताजननानन्तर मेव तेषां नाशः । योग्यताचैव मुत्पत्त्यपूर्वोऽव्यवहिता पूर्वजननानुकूला । तच्च क्वचि द्वक्ष्यमाण रीत्या समुदायापूर्वं क्वचिच्च परमापूर्वमिति विशेष । अत एव प्रकृतो समुदायापूर्वस्यैवाऽव्यवहितस्य सौर्यादावभावेऽपि परमापूर्वस्यैवा व्यवहितत्वा तदनुकूलैवयोग्यता । सुत्याकालीनाङ्गानाञ्च प्रकृताव्यवहितपरमापूर्वानुकूलयोग्यताजनकानां द्वादशाहे अव्यवहिततत्सुत्यासमुदायापूर्वानुकूलयोग्यताजनकत्वम् । युक्तञ्चैतत् - करणस्यानुग्रहापेक्षारूपेति कर्तव्यताकाङ्क्षाया प्रकरणादिनावगताङ्गभावानां प्रयाजादीनां साक्षात्प्रधान तदपूर्वार्थत्वयो रसम्भवे तदव्यवहितापूर्वार्थत्वस्यैव कल्पनात् । अत श्चोत्पत्त्य पूर्वाव्यवहिता पूर्वजननानुकूल योग्यता सम्पादन मुत्पत्त्यपूर्वनिष्ठ मारादुपकारकाणां स्थायान्तरा पूर्वद्वारा फलमिति सिद्धम् ।

यत्तु "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इत्यादौ बृहस्पतिसवादीनां वाजपेयेनेति तृतीयाबलेन बृहस्पतिसवव्यतिरिक्त सर्वाङ्गयुक्त वाजपेयानुष्ठानेन तज्जन्यपरमापूर्वं निष्पत्त्यनन्तर क्रियमाणानां न परमापूर्वे निष्पत्ताव पयुपयोगसम्भवः , तत्र परमापूर्वस्यैव बृहस्पतिसवाकरणे नाशकल्पना त्परमापूर्वस्थापकत्व - वैमृधस्य च पौर्णमासीसमुदायापूर्वस्थापकत्वमिति मूलानुयायिन ।

वस्तुतस्तु बृहस्पतिसवापूर्वं वाजपेयपरमापूर्वावस्थानं यावत् स्थापि तथा भाव प्रसङ्गसिद्धयापत्तेः वाजपेय प्रयोगान्तरे पुन बृहस्पतिसवकरणानापत्ति । नान्त्य , बृहस्पति सवापूर्वनाशे वाजपेयापूर्वं व्यवस्थानानुपपत्तेः । नच-बृहस्पतिसवापूर्वानुत्पत्तेरेव तन्नाशकत्वकल्पनान्नदोषइति वाच्यम् ,प्रयाजाद्य पूर्वानुत्पत्तेरपि दर्शाद्यपूर्वोत्पत्तिप्रतिबन्धकत्व कल्पनापत्त्या तस्यापि स्थायित्वानापत्तौ पशुपुरोडाशेऽपि प्रसङ्गसिद्ध्य नापत्ते ।

अथ - अपूर्वानुत्पत्तेरभूताया गुरुभूतायाश्च कारणत्वाकल्पना त्प्रयाजाद्यपूर्वाणां प्रधानापूर्वनिष्पत्तिपर्यन्त स्थायित्व कल्प्यते ? ततो

बृहस्पतिसवाकरणस्यापि नाशकारणत्वाकल्पना स्थापकत्वसिद्धिः । अतो वाजपेयपरमापूर्वस्य वाजपेयफलानुकूल योग्यतासम्पादनं बृहस्पति सवापूर्वेण क्रियतइति वेदितव्यम् । एवं परिधानीये कर्मण्यपि सादनादिपात्र प्रतिपत्त्यपूर्वस्यापि अव्यभिचरित क्रतुसम्बन्धोपस्थापिता मुष्मिकफलसाधन क्रतुजन्य परमापूर्वनिष्ठयोग्यतां फलानुकूलां प्रत्येव जनकत्वं बोध्यम् । नचा विशेषप्रवृत्त प्रतिपत्त्यनुरोधेन कार्यादि जन्यदृष्टे स्त्वामुष्मिकत्वकल्पनाः आहिताग्निजनक पवमानेष्ट्यनुरोधेन प्रतिपत्तेरैहिकातिरिक्त क्रतुविषयत्वस्यावश्यकत्वे नैवंविधकल्पनस्या न्याय्यत्वात् । अत एव पवमानेष्टचनन्तरएवकरणे नदक्षिणहस्तादिनियमः । याज्ञिकास्तु सादनस्य दार्ह्यांगत्वमभिप्रेत्य तमनु तिष्ठन्ति । दाढ्यस्यतु संस्कारेषु पाठा दामुष्मिकफलोपयोगिसंस्कारं प्रत्यपि जनकत्वा त्पवमानेष्ट्यनन्तरं करणेपि न विरोधः । आहिताग्नि शरीरप्रतिपत्तिस्तु आनुषंगीकीति तदभावेपि नक्षतिः । नचैव- दर्शा द्युपत्त्यपूर्वेष्वेव फलजननानुकूल योग्यताया उत्तरांगैस्सम्पादनोपपत्ते स्समुदायापूर्व, परमापूर्वयोः कल्पनानुपपत्तिः, तत्र वा तत्कल्पने वाजपेयेपि परमापूर्वजन्या पूर्वान्तरस्वीकारापत्तिरिति वाच्यम् ; अपूर्वा न्तर स्वीकारेमानाभावात् । यथा च समुदायापूर्व परमापूर्वयोः कल्पनोपपत्ति स्तथोत्तरत्र निरूपयिष्यामः ।

; तस्मिन्नारादुपकारकाणा मुपयोगः । सन्निपत्योपकारका णान्तु क्षुपाद्यवयवसम्बन्धांगभावानां व्रीह्यादिस्वरूपे आनर्थक्य प्रसंगेन तण्डुलादिपरम्परया प्रधानपर्यन्तं गमनात्तात्राप्यानर्थक्यप्रसक्ते रुत्पत्त्यपूर्वजननानुकूल तद्गत योग्यतासंपादनमेव फलमवसीयते । अत एव तत्त द्युत्पत्त्यपूर्वं जननानुकूल तत्तत्प्रधानानुगत तत्त योग्यता सम्पादनपर्यन्तं प्रोक्षणादिजन्या वान्तरापूर्वस्यावस्थानम् ।

नच-व्रीहिगत योग्यताजननमेव प्रोक्षणादेः फलमस्तु, किं प्रधानगत येतिवाच्यम् , व्रीहिगताहि योग्यता किं तण्डुलादि जनिकावास्याद

अपूर्वजनिका वा ? नाद्यः, तण्डुलाद्युत्पत्तेर्लोकसिद्धत्वेन प्रोक्षणाद्यजन्यत्वात्; अवघात जन्यत्वेऽपि तन्नियमाजन्यत्वस्य तुल्यत्वाच्च। नान्त्यः, व्रीहीणामपूर्वाजनकत्वात्; परम्परासम्बन्धाङ्गीकारेऽपि विवक्षितरीत्या प्रधानतदपूर्वजनकस्यैव अदृष्टोपाया पेक्षितत्वेन तत्रैव प्रोक्षणादीनां योग्यताजनकत्वस्य कल्पनीयत्वात्। अत्र तदपत्यपूर्वजनकप्रधानगतयोग्यतासम्पादनफलकानां प्रोक्षणादीनां साक्षात् तत्तत्फलजनकत्वायोगात् अवान्तरोपकारद्वारेण तदित्याभीप्सितः तथावान्तरोपकारः क्वचिददृष्टरूपः, यथा प्रोक्षणादिषु। क्वचिद्दृष्टरूपः, यथा अवघातादिषु। यद्यपि दृष्टरूप स्तत्रापि नियमांशेऽदृष्टरूपोऽस्त्येवेति वक्ष्यते। उभयविधोपकार श्चायं व्रीह्यादिगत क्रियाजन्यातिशयशालित्वरूप कर्मत्वनिर्वाहाय व्रीह्यादि गतएवकल्प्यते। ननु प्रयाजादि वदात्मनिष्ठः। अतएव वपनादिजन्यस्या दृष्टस्यात्मगतत्वेऽपि संस्कार्यतया दात्मनः कर्मत्वाविघातः। दृष्टरूपस्यतु वितुषीभावादेः व्रीह्यादिनिष्ठत्वं प्रत्यक्षसिद्धमेव। अवघातादिनियमादृष्टस्यापि यदर्था क्रिया तदर्थो नियम इति न्यायेन व्रीह्यर्थतावधारणाद्व्रीहिनिष्ठत्व मेव। नचैवं – व्रीह्यादिनाशे तन्नाशापत्तिः व्रीहिनाशेऽपि तददृष्टस्य व्रीह्यवयव निष्ठत्वकल्पनात्। अतः पुरोडाशप्रकृतिप्रोक्षणादिजन्य मपूर्वं विषयतासम्बन्धेन पुरोडाशयागवृत्ति तदपत्यपूर्वानुकूलयोग्यतामादधातीति सिद्धं।

ननु-उक्तन्यायेन अवघातनियमादृष्टस्यो पयोगसम्भवेऽपि दधिप्रोक्षादिनियमादृष्टाना मुपयोगासम्भवः; तद्धि यागे कृते नियमेनोत्पद्येत, अतश्च प्रथमक्षणे यागोत्पत्तिः, द्वितीयक्षणे अदृष्टं, तृतीयक्षणेच तेन योग्यता, तेन चतुर्थक्षणे यागस्यनष्टत्वात् नापूर्वोत्पादकत्व सम्भवइतिचेत्;-नियमादृष्टं हि न नियमजन्यं, किन्त्ववघातजन्यमेव। वितुषीभावोद्देश्यता व्यधिकेति परं वक्ष्यते। अत्र च मुख्यन्यायतया दध्यादिभि यागे जन्यमाने तस्मिन्नेव क्षणे तैरदृष्टमपि द्वितीयक्षणे तेन यागे योग्यता तृतीयक्षणेच योग्येन तेनो त्पत्त्यपूर्वं यागनाशश्चेति न किञ्चि दनुपपन्नम्।

अत एव तददृष्टस्य न दध्यादिनिष्ठता, तस्य यागसमानकाल एव प्रक्षिप्यमाणत्वेन तन्नाशे नाशापत्तेः। अपितु यागनिष्ठता आत्मनिष्ठता वा। येषांतु प्रधान समकालानां तदुत्तरभाविनां वा प्रक्षेपस्विष्टकृदादिभक्षाणां प्रतिपत्तित्वेन नोत्पत्त्यपूर्वोत्पत्त्युपयोगिप्रधानगत योग्यताजनकत्वसम्भव स्तेषामपि परमापूर्वजननानुकूलोत्पत्त्यपूर्वगतयोग्यताजनकत्वेन वा उत्पत्त्य पूर्वस्थापकत्वेन चोपयोगो द्रष्टव्यः। अत एव तन्नियमापूर्व मध्यात्मगत मेव, नतु संस्कार्यत्वेपि द्रव्यगतं, तस्य प्रतिपत्तिनाश्यत्वेना पूर्वाधार त्वानुपपत्तेः। संस्कार्यत्वं च तत्र दृष्टरूपसंस्काराश्रयत्वादेवोपपन्न मिति न कश्चि द्विरोधः। तदेव मंगानां प्रकारभेदे सत्यपि सर्वेषां साक्षा त्परम्परया वा करणानुग्राहकत्वा दिति कर्तव्यतात्वोपपत्तिः।

तसिद्धं नष्टेपि व्यापारिणि फलबलेनाभ्यान्तरकल्पनोपपत्ते रपूर्वंव्य। पारेणैव यागादीनां फलजनकत्वमिति। तत्र एकमेव प्रधानं पूर्वो त्तरांगविशिष्टं फलसाधनं तत्र प्रधानानन्तरक्षणे एक मपूर्वं मपरंच सर्वांगसमाप्त्युत्तरं परमापूर्वम्। एवं यत्र प्रधाना न्यनेकानि तत्रापि तावन्त्युत्पत्त्यपूर्वाणि एकं परमापूर्वं मित्युत्सर्गः। यत्रतु दर्शपूर्णमासादौ पौर्णमास्यां दर्शे च सांगत्रिकद्वयानुष्ठानम्, तत्रैकस्मिन् समुदाये उत्पत्त्यं पूर्वत्रयेण सर्वांगकरणात्ते रेकैकं समुदायापूर्वं मन्यते, तत श्च समुदायद्वयान्ते ताभ्या मेकं परमापूर्वमिति विशेषः। अत एवारादुपकारकांगाना मपि तत्तत्समुदायापूर्वे एवोपयोग कल्प ना त्समुदायद्वयेपि पुनः पुनरनुष्ठान मंगानां न विरुद्ध्यते। नच द्विरंगानुष्ठानस्य परमापूर्वं एवोपयोगसम्भवा त्समुदायापूर्वकल्पने मानाभावः, " पौर्णमास्यां पौर्णमास्यां यजेत " " अमावास्याया ममावास्यायां यजेत " इति वाक्यद्वयावगतकरणत्वसाहित्यस्यैव मान त्वात्। यद्यपि चोत्पत्तिवाक्ये प्रत्येकमेव करणत्वा दत्रापि न त्रिक निष्ठ व्यासज्यवृत्त्येकं तत्; तथापि करणताश्रयसाहित्यस्योपादेयगतस्यैक कार्यनिरूपितत्व मावश्यकं, अन्यथा चित्राग्नेयादीनामिव साहित्यव्यवहारा

नुपपत्ते, अत एव समुच्चित्यैककार्यकारित्व मेव साहित्यपदार्थ । इदं च न फलनिरूपितम्, करणषट्कसाहित्यस्यैव तदङ्गत्वात् । अत एव न परमापूर्वनिरूपितं । नाप्युत्पत्त्यपूर्वनिरूपितम्, तस्यैक करणजन्यत्वात् । अत एतद्वाक्ये करणत्रयसाहित्यस्यापि कार्यापेक्षा या समुदायापूर्वद्वयसिद्धिः ।

अत एव साद्यस्के दधिपयसी स्सम्प्रतिपन्न देवता कायेन सहानुष्ठाना देवमेवापूर्व मसिवत्यपास्तम्, तत्त दुपत्तिवाक्ये निरपेक्षकरणत्वस्य निरूपकापेक्षाया मभ्यासभवेनैवा पूर्वद्वयसिद्धेः । एवं मग्निहोत्रचातुर्मास्यादिष्वपि साय प्रातरादि वाक्येषु करणत्वेन प्रयागविधाना त्समुदाया पूर्वसिद्धिः ।

अग्निहोत्रेतु यद्यपि कर्मैकत्वे देवतासमुच्चयायनुरोधेना भ्यासा दुप त्त्यपूर्वभेदावगमा त्कालभेदेन समुदायापूर्वभेदात्तदुत्तर परमापूर्वोत्पत्ति रिति द्रष्टव्यम् । सोमेतु यद्यप्यभ्यासा दुत्पत्त्यपूर्वभेदे समुदायापूर्वाभावा त्तदुत्तरमेव परमापूर्वोत्पत्तिः । द्वादशाहादौतु प्रत्यहं षोडश्यगतकरणत्व बलेन तत्तत्सुत्या पूर्वाण्यपि तत्तद्दूहत्य भ्यासोत्पत्त्यपूर्वजन्यानि कल्प्यन्त इति ते देव परमापूर्वसिद्धिः ।

ननु कल्प्यन्तां तत्र तत्रोत्पत्त्यपूर्वाणि करणत्वबलेन वा समुदाया पूर्वाणि, परमापूर्वेतु नैव किंचित्प्रमाण पश्याम । तथाहि यत्र तावदस्ति समुदायापूर्व तत्राराद्रुपकारकाणां तत्रैवोपयोगात्तातिरिक्ता पूर्वांतर कल्पनायां प्रमाणमस्ति । यत्रापि च न समुदायापूर्व तत्राप्युत्तराङ्गै रुत्पत्त्यपूर्वैरेव फलजननानुकूल योग्यतासम्पादनोपपत्ते र्नातिरिक्तापूर्व कल्पन । यत्र नैवाराद्रुपकारकाणि उत्तराङ्गाणि सन्ति तत्र परमापूर्व कल्पनायां किं प्रमाण । यदि प्रागवैयर्थ्यानुपपत्त्या परमापूर्वकल्प्ये त, ततो विकृतिषु परमापूर्वकल्पनाभावेन द्वारलोपा दङ्गानि माप्नुयु । अत किं परमापूर्वसद्भावे प्रमाणमितिचेन्न:- दर्शपूर्णमासादौ तावत्फल

वाक्ये साहित्यविशिष्टानां षण्णां यागकरणतानां फलनिरूपितत्वावगमात् तस्य च व्यापारमन्तरेणानुपपत्तेः तदपेक्षायां परमापूर्वकल्पनोपपत्तेः । नहि तत्रोत्पत्त्यपूर्वं समुदायापूर्वयोर्व्यापारत्वं सम्भवति, तेषां षट्साहित्यावच्छिन्न जन्यत्वाभावात् । फलनिरूपकतावच्छेदकावच्छिन्न जन्यस्यैव व्यापारत्वौचित्यात् । यद्यपि चात्र प्रतियागं करणताभेदस्तदवच्छेदकानि चाग्नेयादीनि भिन्नान्येव, तथापि सर्वासु करणतासु एका फलनिरूपकता, फलस्यैक्यात्; तदवच्छेदकश्च षट्साहित्यं । नच तदवच्छिन्नजन्यत्वमुत्पत्त्यपूर्वादीनां सम्भवति । अतस्तेषां व्यापारत्वायोगात् परमापूर्वसिद्धिः । नचैवं समुदायादिवाक्येष्वपि करणत्वश्रवणात्तस्य च कार्यनिरूपितत्वात् स्वकार्यरूपापूर्वकल्पनवत् व्यापारापेक्षायां व्यापाररूपाणामप्यपूर्वान्तराणां कल्पनापत्तिः; अनेकापूर्वकल्पनाभिया समुदायादिवाक्येषु साधकतमत्वापरपर्यायानन्तरकार्योत्पादकत्वरूपस्यैव करणत्वस्य विवक्षितत्वात् । अनुशिष्टैव हि तादृशकरणतायां तृतीया पाणिनिनापि । फलवाक्ये तु फलस्य कालान्तरभावित्वेन तादृशकरणत्वस्य बाधात् व्यापारवदसाधारणकारणत्वरूपा करणता वाच्या । नचासौ व्यापारमन्तरेण सिद्ध्यतीत्युक्तविधया परमापूर्वसिद्धिः ।

एवमंगानामपि परस्परव्यवहितानामिव प्रयोगविधिबलेन प्रधानोपकाररूपफलजनकत्वावगमात्तस्य चाव्यवधानेनानुपपत्ते र्व्यापारापेक्षायां प्रधानतरोपकारकाणां साहित्यावच्छिन्नजन्यत्वेन व्यापारत्वायोगात् परमापूर्वस्थानापन्न मेकमपूर्वं व्यापारत्वेन कल्प्यते । पार्थसारथेस्त्वेतदनिच्छतः परमापूर्वमपि न सिद्ध्येदिति ध्येयम् ।

यत्र त्वेकमेव प्रधानं पूर्वोत्तरांगविशिष्टं फलजनकत्वेन श्रूयते, तत्र फलस्य कालान्तरभावित्वेन व्यापारापेक्षायां कल्पितस्यापूर्वस्यापि सांगप्रधानोत्तरकालोत्पत्तिकत्वावगते र्युक्ता तत्रापि परमापूर्वसिद्धिः ।

न च सत्त्वावश्यकत्वेनोत्पत्त्यपूर्वेणैव फलसिद्ध्युपपत्ते रपूर्वान्तर कल्पने गौरवमिति वाच्यम्, सांगस्य फलजनकत्वश्रवणान्यथानुपपत्त्या कल्पितस्या पूर्वस्य सांगप्रधानानन्तर मेवोत्पत्तिसम्भवेन गौरवस्यापि प्रामाणिकत्वात् ।

न च औत्तरकालिकेनापि गौरवप्रतिसन्धानेन पूर्वप्रमितस्यापि सांगप्रधानानन्तर्यस्य बाध एव किं न स्यादिति वाच्यम्, तथात्वे श्रुतायाः स्वर्गफलकरणताया एव बाधापत्तेः ।

अस्तु वा तादृशस्थले उत्पत्त्यपूर्वादेव फलं, अंगानां च फलानुकूलयोग्यताजनकत्वम्; नचैवं-विकृतिषु परमापूर्वाभावा दतिदेशानापत्तिः, प्रकृतौ उत्पत्त्यपूर्वगता व्यवहितकार्यजननानुकूलयोग्यताजनकत्वस्यैव तादुपकारकांगकार्यत्वेन विवक्षितत्वात् । तथोत्पत्त्यपूर्वव्यवहित कार्यसमुदायापूर्वं क्वचित्परमापूर्वं क्वचित्फल मेवेति युक्तो विशेषः । द्वयमपि पक्षौ वार्तिककृता "केचिदाहु" रित्यादिना । अत एव दर्शपूर्ण मासादिष्वपि परमापूर्वं विनैव कलापूर्वैरेव फलसिद्धे र्न तत्कल्पन मित्यपि सुवचम् । सर्वथा सिद्ध मपूर्वम् ।

अस्य चाधिकरणस्य आक्षेपसमाधानरूपत्वात् न स्वातन्त्र्येण प्रयो जनकथने यतितव्यम् । सूत्रन्तु आरभ्यत इत्यारम्भो पूर्वं, तत्पुन रापाद्यते यागेन । यतो यागस्वर्गं साध्यसाधनभावस्य वाक्येन चोदनेति व्याख्येयम् ।

॥ इत्यपूर्वाधिकरणम् ॥ २ ॥

## ॥ अथ कर्मणां गुणप्रधानभावविभागाधिकरणम् ॥

॥ १ ॥ सू - तानिद्वैधं गुणप्रधानभूतानि ॥ २ - १ - ७ ॥

एवं तावत्सिद्धमपूर्वं, तच्च धात्वर्थादेवेत्यपि धात्वर्थस्या पूर्वजनकत्वेन द्रव्यादेस्तदर्थत्वमित्यपि च। इदानीं तदपवादः प्रस्तूयते। "व्रीहीन वहन्ति" "तण्डुला न्पिनष्टि" इत्यादाव वघातपेषणादीनां स्वतन्त्रापूर्वार्थत्वं व्रीह्यादे स्तदर्थत्वं? उत तेषां वितुषीभावादिरूपप्रयोजनलाभा प्राद्दष्टार्थत्वम्, व्रीह्यादेस्तु अवघातादीन्प्रति प्राधान्यादेव तदर्थत्वम्? इति विचार्यते।

सति च दृष्टार्थत्वे धात्वर्थभावनाभेदसत्त्वे प्यपूर्वभेदाभावात् अपूर्वभेदोपयोगिचिन्तनात्मकत्वेन पादाध्यायसंगत्यविघातः।

तत्रावहन्तीत्यवघातभावनाया अन्योत्पादकत्वभावत्वेन जन्यभाव्यापेक्षायां सत्यपि व्रीह्यादीनां द्वितीयया कर्मत्वावगमे तेषा मवघातायजन्यत्वेन भाव्यत्वायोगा त्र ताव दवघातो व्रीह्यर्थः। नच स्वरूपेण व्रीहीणा मजन्यत्वेपि वैतुष्यविशिष्टत्वेन भाव्यत्वोपपत्तिः, वितुषीभावजनकत्वेना वघातस्य लोकत एव प्राप्तत्वेन तदंशे विधिवैयर्थ्यात्। नच लोकतो विदलनादेरपि प्राप्तत्वेन तन्निवृत्तिफलकस्य नियमस्यैवायं विधिरस्त्विति वाच्यम्, तर्हि नियमेन वितुषीभावस्या प्यजननात् तद्वैशिष्ट्यरूपेणापि व्रीहीणां नियमं प्रति भाव्यत्वानुपपत्तेः। नहि नियमं प्रति वितुषीभावविशिष्टत्वेन भाव्यतानुपपत्ता वप्यदृष्टविशिष्टत्वेन भाव्यत्वोपपत्तिः, अशाब्दनियमा दृष्टकल्पनापेक्षया शाब्दावघातादेव तत्कल्पनस्योचितत्वात्। नचास्तु तर्ह्यवघातादेव व्रीहिनिष्ठा दृष्टकल्पनमिति न व्रीहीणा मवघातार्थत्वसिद्धिः, अदृष्टे आत्मनिष्ठत्वेन प्रयाजादिजन्यादृष्टवदनपेक्षिताश्रये व्रीह्याश्रयत्वकल्पनापेक्षया अवघात एव द्रव्यापेक्षव्रीहिरूप द्रव्यविधिप्रतीतेः। अत एवापेक्षितविधिलाभाय प्रयाजशेषाभिघारण इव लक्षणया द्वितीया विभक्तिः करणत्वपरा अनीप्सितकर्मत्वपरा वा नीयमाना न दुष्यति। नच तथापि व्रीहिविधेः स्तन्नियमविधे र्वा अवघातविधिपदे वानुपपत्ति स्तुल्येति वाच्यम्, अवघातजन्यादृष्टं प्रत्येव व्रीहिनियमविधे रुपयोगानुप

पत्तेः। यथा स्वघातस्य व्रीहिसाध्यापूर्वं प्रायुपयोगाङ्गीकारे व्रीहि साध्यस्य यागजन्यापूर्वस्य यागभावनायामिव आश्रयत्वेनान्वया वाव घातभावनायां भाव्यत्वेन तदन्वयइति अवघातजन्येप्सितरूप भाव्या भावप्रसंगः। तस्माद्व्रीहि विशिष्टावघातएव प्रयाजादिवद दृष्टार्थो विधीयतइति प्रक्षे- अभिधीयते ; यत्र दृष्टप्रयोजनं नसम्भवति तत्र युक्ता अदृष्टस्यापिकल्पना, आत्मनिष्ठस्यापि। यत्तु दृष्टप्रयोजनसम्भवः यथा प्रकृते, न तत्र आत्मनिष्ठादृष्टकल्पना। अत एवोभयत्र क्रियां प्रति द्रव्यस्य यथा यथं गुणत्वं प्राधान्यंच, क्रियायाश्च द्रव्यम्प्रति प्राधा-न्यगुणत्वंच। अतो धात्वर्थरूपक्रिया प्रतिपादका न्याख्याताख्यातानि पदानि यथा सम्भवं गुणप्रधानभावेन द्विविधानि विद्येयानीति सूत्रार्थः।

॥ १ ॥ सू - यैस्तु द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात् ॥ २ - १ - ८ ॥

नन्वेवमपि फलदृष्टप्रयोजनासम्भवेन प्रधानकर्मता, फलासम्भवेन गुणकर्मेत्व, सिद्धान्तेन्य पूर्वपक्षयुक्तप्रयाजदृष्टान्तवैरूप्य प्रदर्शनार्थमनेन सूत्रेण कर्मणो लक्षणमुच्यते। येषांहि यागीय द्रव्यदेवतादि संस्का रार्थत्वं तदंगता बोधकप्रमाणाभावेन नेष्यते तानि कर्माणि स्वतन्त्राम निष्ठादृष्टजनकानि सन्ति द्रव्यादिप्रतिपादनभूतानि। द्रव्यादीनिच तत्र सिद्धसाध्यसमभिव्याहारे सिद्धसाध्यतयोपयुज्यते इतिन्यायेन तत्तद्धातु स्यैवता क्रियां प्रतिश्च गुणभूतं, यैस्तु द्रव्यचिकीर्ष्यते गुणस्तत्र प्रतीत्यैव तस्य द्रव्यप्रधानत्वात। येषान्तु यागीयद्रव्यादि संस्कारार्थत्वं प्रमाण बलेन निर्णीतं तेषां दृष्टप्रयोजनासम्भवे व्रीहीन् प्रोक्षतीत्यादौ अदृष्ट द्वारापि यद्यद्द्रव्यसंस्कारार्थत्वं प्रोक्षणादे रभ्युपगम्यद्रव्यं प्रतिगुणकर्म त्व मुत्तराधिकरणे उपपादयिष्यते, तदा कोनामव्रीहीनवहन्तीत्यादौ पुरोडाशनिष्पत्त्यौपयिक वितुषीभावरूप द्रव्यप्रयोजनलाभसम्भवे अद दृष्टकल्पनया प्रधानकर्मत्वमापादयितुं समर्थः। अतएव तत्र भावना

भाव्यमपि वितुषीभावविशिष्टत्वेन व्रीह्यादय एव । चतुर्विधं हि सर्वप्रभाव्य मिष्यते । किंचिदस्वतएवोत्पाद्यत्वेन । यथासंयवनेनपिण्डः। किंचिदा प्तिविषयत्वेन । यथादोहनेनपयः। किंचिद्विकारविशिष्टत्वेन, यथाव घातेनव्रीहयः, तत्र वितुषीभावाख्यो विकारोजन्यते । किंचिच्च सं स्कारविशिष्टत्वेन । यथातएव प्रोक्षणेनादृष्टरूप संस्कारजननात् । अतश्च व्रीहीणां स्वरूपेणभाव्यत्वायोगेपि युक्ता वितुषीभावविशिष्टत्वेन भाव्यता । न च वितुषीभावसाधनत्वस्य लोकतएव प्राप्तत्वा द्विधि वैयर्थ्यं, लोकस्याव्यभिचारितान्वयव्यतिरेकग्रहणापेक्षत्वेन विलम्बितत्वा त्ततः पूर्वमेव विधिवाक्येन तद्विधानात् । तत्प्रयोजनंच विदलनादि व्यावृत्तिफलको नियमः। तस्यापि च प्रयोजनं दृष्टाभावाददृष्टं। तस्य चादृष्टस्य वितुषीभाव फलावघातोपजीविनियमजन्यत्वान्न कृष्णलचरौ वैतुष्यासम्भवे नियमावघातप्रयोजकत्वं। यदित्व शाब्दस्यानियमस्याद ष्टजनकत्वानुपपत्तिराशंक्येत, ततो विधेयादेव अदृष्टं कल्प्यते। तच्च वितुषीभावस्य मुख्यफलत्वे व्यानुषंगिकत्वेन कल्प्यते, नतवनुष्ठापक त्व रूपमुख्योद्देश्यतया, गौरवापत्तेः । अतएव कृष्णलचरौ वैतुष्य भावनादृष्टानुरोधेनावघातानुष्ठानं। उद्देश्यतावैजात्याच्च नोद्देश्यानेकत्व निमित्तको वाक्यभेदोपि । आर्थिकविध्यन्तर फलत्वाद्वानतः । अदृष्टस्याननुष्ठापकतापि चैतादृशी, यद्वैतुष्याभावे तस्याननुष्ठापनं नतु वैतुष्यसम्भवेपि, विदलनादे रप्यनुष्ठानापत्तेः । अतएव तद्व्या वृत्तिफलक नियमफलकत्वा न्नियमादृष्ट व्यवहारः ।

ननु नवमाधिकरणन्यायेन व्रीहिपदे अपूर्वसाधनत्वलक्षणाया आवश्य कत्वादवघात विधे वितुषीभावस्वरूपेवा नर्थक्येपि तज्जन्य प्रधानापूर्वस्या वघातंविनानुपपत्ते स्तदुपायत्वपर्यवसानेनावघातविधित्वार्थक्यात्कृतं नियमादृष्टेन,

नियमादृष्टकल्पने वा तेनैवानर्थक्यपरिहारोपपत्तेः फलमपूर्वसाधनाव लक्षणयेति चेन्न ;- अवघातं विना विदलनादिना वितुषीभावसत्वेन पूर्वानुत्पत्तौ प्रमाणाभावात् । नचावघाताभावे तज्जन्यवितुषीभावाभावात् तत्सामग्र्यभावः, अवघातविदलनजन्यवितुषीभावव्यक्त्योर्वै-जात्ये प्रमाणाभावेनावघाताभावेपि तज्जन्यवितुषीभावसत्वात् तत्सामग्र्यभावासिद्धेः । नच कार्यकारणभावे व्यभिचारपरिहारार्थमेव वैजात्य कल्पना, अनेककार्यकारणभावादि कल्पनागौरवभिया द्वयोरेकशक्तिमत्त्वेन कारणतांगीकारात्। यत्तु व्रीहियवादिवाक्ये कारणताद्वयं प्रमाण सिद्धं तत्रैव परमाम्रेयादौ वैजात्यकल्पनमिति तेषःमर्थाधिकरणेवक्ष्यते, नात्र। अतश्च पूर्वसाधनावलक्षणाया मप्यवघातविधिवैयर्थ्यस्य तदवस्थत्वाद्यपरमवघातेन वैतुष्यवददृष्टमपि व्रीहिनिष्ठमाधेयम् । अन्यथा अवघातस्या पूर्वसाधनायानुपपत्तेः । नचैवमपूर्वसाधनत्वलक्षणावैयर्थ्यं, निय-मादृष्टस्यापि व्रीहिरूपे अनुपयोगित्वेन प्रधानापूर्वार्थत्वावश्यंभावात् । अतस्सिद्धा अवघातस्य नियमादृष्टजनकत्वेपि दृष्टवितुषीभावद्वारा व्रीह्यर्थता, योग्यतारूपलिंगात् । द्वितीयाश्रुते नियमविधित्वाच्च । एवं द्वितीयविधि प्रकारांगीकरणा ज्ज्ञापयम् । इतरथा विशिष्टविध्यः श्रयणा त्पंचमप्रकारांगीकरणे गौरवंस्यात् । तस्मात्तावघातात्प्रयोजनीभूतादृष्टकल्पनं । अतएतादृशस्थले धात्वर्थभावनाभेदसत्वेपि नप्रयोजनभूतापूर्वभेदः । प्रयोजनपूर्वपक्षे प्रैय्यंगवश्चरुर्भवतीत्येत द्वाक्यविहितयामे यागीयहविः प्रकृतिभूतव्रीह्यभावे प्यतिदेशप्राप्तावघातांगत्वेन व्रीह्य लाभ्यथा एव । यथातिदेशप्राप्तप्रयाजाद्यंगत्वेनाज्यं । नच प्रकृतौनिर्वा-पोत्तरकाल प्रवघातानुष्ठाना दवघातस्य परमयुक्तव्रीह्युपजीवित्वावगतेः प्रैय्यगवचरौ तदभावे अवघातस्यानुष्ठानमेव स्या न्न तदनुरोधेन

व्रीहिसम्पादनमिति वाच्यम्; अवघातस्य वाजिन न्यायाविषयत्वेन परप्रयुक्तव्रीह्युपजीवित्वासिद्धेः ।

तथाहि, न तावद्वाजिनन्याय विषयत्वं, दध्यानयनस्य ह्यामिक्षार्थत्वं वाक्यीयं न वाजिनार्थत्वं। अत आमिक्षाप्रयुक्तदध्यानयनानुनिष्पन्नत्वाद्वाजिनस्य तद्दध्यानयनप्रयोजकतेति न्यायः । नचासौ प्रकृते सम्भवति, व्रीहीणां यागांगत्वस्ये वावघातांगत्वस्यापि वाक्यीयत्वाविशेषाद्वाजिनवदवघातस्या नुनिष्पन्नत्वाभावाच्च । नापि पदकर्मन्यायः, तत्रहि तेनाक्षमुपाञ्ज्यादिति तच्छब्दस्य सप्तमं पद मध्वर्यु रंजलिना गृह्णातीत्यत्र च पदशब्दस्य सापेक्षत्वादुक्तपरप्रयुक्तक्रयांगभूतैकहायनीनयनोपजीवित्वं, प्रकृतेतु व्रीहिशब्दस्य प्रकृतानपेक्षत्वा न्न यागीयव्रीह्युपजीवितेति विशेषः। पुरोडाशकपाळे नेतिवच्च प्रयोजकयुक्ताभिधानाभावा न्नपुरोडाशकपाळ न्यायः । व्रीहिशब्दस्य सम्बन्धकत्वाभावा न्नोत्तरार्धन्यायोरि । निनयनन्यायस्तु प्रतिपत्तित्वाभावा देवानाशंक्यः । नच गुणस्य दोहनादेः परप्रयुक्ताश्रयोपजीवित्वेना प्रयोजकत्ववद, अवघातस्यापि यागप्रयुक्तव्रीह्याश्रयत्वा तदप्रयोजकत्वमिति वाच्यम्; प्रणयनादे र्हि गुणांगत्वे प्रमाणाभावेन गुणस्य तत्प्रयोजकत्वानुपपत्ते र्युक्ता तस्य परप्रयुक्तोपजीविकता, व्रीहीणांतु यागांगत्वस्येवाव घातांगत्वस्यापि वाक्यीयत्वाविशेषा द्विनिगमनाविरहेणैकस्येतर प्रयुक्तोपजीवकत्वानुपपत्तेः । नच निर्वापेण व्रीहीणां यागीयत्व निश्चयाद्यागप्रयुक्तत्वावगते र्विनिगमनसत्वेन तदुत्तरभाविनोवघातस्य तदुपजीवकत्वोपपत्तिः, एवंपूर्वपक्षे निर्वापस्याप्या तदुपकारकत्वेनाव घाततुल्यात्वा त्तेन व्रीहीणां यागीयत्वनिश्चयानुपपत्तेः । नच निर्वा–

अत्र च सिद्धान्ते स्रुगादिनिष्ठाधेय शक्तिरूपातिशयसद्भावेपि तस्यात्मनिष्ठादृष्टपदवाच्यत्वाभावा दपूर्वाभावेन पूर्ववदेवापूर्वभेदोपयोगि चिन्तनात्मकाया स्यादाद्यापत्तसंगति । प्रोक्षणादि संस्कारकर्मत्वे प्रति पुरोडाश मपूर्वकल्पना [स्यादभे] तद्भेदोपयोगित्वेन सा । अनन्तरातु पूर्वाधिकरणसिद्धान्तहेतुभूत दृष्टोपकारकत्वमप्युदाहरणरूपेण पूर्वपक्षो त्थानाहृष्टव्या ।

तत्र – पूर्वाधिकरणपूर्वपक्षन्यायेनैव स्रुगादे स्सम्मार्गाद्यजन्यापूर्व भाव्यतायोगा, दपयातवच्च दृष्टोपकारविशिष्टत्वेनापि तदसम्भवात्, स्रुगादिविशिष्टसम्मार्गादिविधान मेव प्रयाजादिवत स्वतन्त्रकर्मपक्षा-रभाव्यत्व युक्त माश्रयितुम् । नचासयातवद्योग्यतारूपलिङ्गात्सम्मार्गादे र्गुणकर्मत्वासम्भवेपि द्वितीयया स्रुगादीनां प्राधान्यावगमा दर्थात्सम्मार्गा दीना तद्गुणत्वावगते दृष्टोपकाराभावे च तद्बलेनैवादृष्टस्य द्रव्य निष्ठस्य कल्पनोपपत्तेर्न स्रुगादिविशिष्टसम्मार्गादिविधानमिति वाच्य, द्विती याया प्राधान्यवाचित्वाभावेन गुणकर्म वासिद्धे । तथाहि–प्राधान्यवाचित्व किं प्रयोगानुसारादभ्युपगम्यते, अनुशासनानुरोधाद्वा? नाद्य, ' बल्वजान् शिराण्डकान् कुरु " " सक्तून् जुहोति " त्यादौ करणत्व एव द्वितीयादर्शनेन तदसिद्धे । नह्यत्र बल्वजादीना कर्मत्व सम्भवति, करोते र्द्विकर्मकत्वाभावेन शिराण्डककर्मावरुद्धे तस्मिन् बल्वजादीना कर्मत्वेना न्वयस्य वक्तुमशक्यत्वात् । जुहोतेश्च देवतोद्देश्यक प्रक्षेप द्रव्य त्यागसमुदायवाचित्वेन सक्तूना समुदायकर्मत्वानुपपत्ते स्सक्तू नामनीप्सितत्वे नैकदेशकर्मत्वस्याप्यनुपपत्तेश्च । अतोत्र बल्वजादीना द्वितीययाकरणत्वमेवाङ्गीकर्तव्यम् । ततश्चान्वय व्यभिचाराद्द्वितीयाया करणत्व एव शक्ति र्नप्राधान्ये । तथा प्रयाजशेषेणेत्यादौ द्वितीयाभा वेपि प्राधान्यदर्शनेन व्यतिरेकव्यभिचारादपि तथात्व निश्चय । जचैव घट करोतीत्यादौ करण त्वासम्भवेपि द्वितीयादर्शनात्तत्रापि व्यभिचार तादवस्थ्यमितिवाच्यम् विषयतासम्बन्धेन घटादेर्ज्ञानंप्रतिकरणत्ववत्त्वात

प्यपि तदुपपत्तेः; अतो ऽ व्यभिचारात्करणत्व मेव द्वितीयार्थः, नतु प्राधान्यमिति प्रयोगानुसारेण निर्णीयते । अत एव प्रयोगविरुद्ध मनुशासनमपि ' कर्मणि द्वितीये ' त्यादिकं न प्राधान्यवाचित्वे प्रमाणम् । अतो न सम्मार्गादीनां द्वितीयया गुणकर्मत्वप्रतीतिः । नापि सप्रयोजनत्वमात्रेण, पुरोडाशकपालादीनां सप्रयोजनत्वेपि तुषोपवापसंस्कार्यत्वा भावात् । अतो गुणकर्मत्वावेदकप्रमाणाभावा त्पूर्वाधिकरण पूर्वपक्ष न्यायेन स्रुगादिविशिष्टसम्मार्ग विधिरेवायम् । सूत्रन्तु- "धर्ममात्रे"- दृष्टोपकाराजनक सम्मार्गादिरूपे, ' प्रयाजादिव ' त्प्रधानकर्मत्वस्यात् , द्रव्यनिष्ठोपकारस्य तेना ' निवृत्ते ' रिति व्याख्येयम् ।

॥२॥ सू - तुल्यश्रुतित्वा द्वेतरैस्सधर्मस्स्यात् ॥ २-१-१० ॥

सत्यं दृष्टोपकारकत्वेन नास्यावघाततुल्यत्व, तथापि द्वितीयाश्रुति तुल्यत्वात् अवघातादिवद्गुणकर्मत्व सम्भवत्येव । तथाहि- द्वितीया प्राधान्याभिधायिनी व्रीहीणामिव स्रुगादीनामपि प्राधान्यप्रतिपादयन्त्य धादवघातस्येव सम्मार्गादीनामपि गुणत्वंगमयति, अतश्च दृष्टोपकारकत्वाभावेपि द्वितीयावगतगुणकर्मत्वनिर्वाहार्थ द्रव्यनिष्ठादृष्टोपकारकल्प नेपि नक्षतिः ।

॥३॥ सू - द्रव्योपदेश इतिचेत् ॥ २-१-११ ॥

पन्न – द्वितीयायाः प्राधान्यवाचित्वे प्रमाणाभावा त्प्रयोगानुसारेण करणत्वावगतेः सक्तुवत्स्रुगादि द्रव्यस्येव सम्मार्गादि प्रत्युपदेशो विधानमित्युक्तम, तत्रोच्यते-

॥४॥ सू - तदर्थ त्वा त्प्रकृत्व त्तस्य च [वि]शेषभूतत्वात ॥२-१-१२॥

न करणत्ववाचिनी द्वितीया , प्रमाणाभावात् । अपितु 'कर्मणिद्वितीये' त्यनुशासना त्कर्मत्वपरा । नचतस्यनिर्मूलत्वं, घटंकरोतीत्यादि प्रयोगस्यैव मूलत्वात । नह्यत्रसत्यपि घटस्य विषयता सम्बन्धेन कृति

यत्तु – तन्त्ररत्ने तन्त्रसारन्यायसुधयोश्च 'यच्छते स्सकर्मकत्वात् युक्तो दण्डस्या नोप्सित कर्मत्वेना न्वयः, जुहोतेस्त्वकर्मकत्वात् सक्तूनां द्वितीयया करणत्वलक्षणे' त्युक्तं, तन्न, हुतोहुतः पर्यावर्तेत इत्यादौ कर्मणिनिष्ठादर्शनेन जुहोतेरकर्मकत्वासिद्धेः । कर्मणि तृतीया चकाराद्द्वितीया चस्यादित्यर्थकेन तृतीयाच होश्छन्दसीति सूत्रकारव्यवहारेण सकर्मत्वावगतेश्च । तस्मादुक्त एवप्रकारः श्रेयान् ।

अत एव गुणफलाधिकारे इन्द्रियकामाद्यवरुद्धायां भावनायां होमस्यानीप्सितकर्मत्वरूपा श्रयत्वेनैव क्रियान्वयोंगीकृतः । अन्यथा तत्रापि तथात्वसम्भवे विशिष्टभावनाविधाने वाक्यभेदाभावा ज्जित प्राभाकरेण । तस्मादुक्त प्रकारेणैव सक्तुषु करणत्वलक्षणा मंगीकृत्य सक्तु विशिष्ट होमविधान मारादुपकारकत्वयेतिसिद्धम् । स्रुगादीनान्तु प्रयोजनवत्त्वस्य प्रमाणान्तरेणा वगतत्वात्तेषामेव भाव्यत्वोपपत्तेर्युक्तं संस्कारार्थत्वं सम्मार्गादीनामिति ।

नचैवं सर्वत्र सप्रयोजनत्वनिष्प्रयोजनत्वकृतमेव द्रव्यस्य क्रियां प्रति गुणप्रधानत्वमिति कृत द्वितीयातृतीयाभ्यामितिवाच्यं, ऐन्द्र्यागार्हपत्यमुपतिष्ठत' इत्यत्रहि सत्यप्यैन्द्रीगार्हपत्ययोः क्रतुसम्बन्धित्वेन प्रयोजनवत्वे द्वितीयैव गार्हपत्यप्राधान्येप्रमाणम् । नचतत्रापि द्वितीयाया नियामकमात्रत्वेपि कथ प्रमाणत्वमिति वाच्यं, द्वितीयाभावे मन्त्रस्यांलिङ्गा दिन्द्रार्थत्वस्यैवावगमा त्तस्यानियामकत्वाभावात्, गार्हपत्यप्रातिपदिकमात्रसमभिव्याहारस्य च लिंगविरोधे सामीप्यनिरूपकत्वेनाप्युपपत्तेः । अतो लिंगबाधेन गार्हपत्य प्राधान्यं द्वितीयाप्रमाणकमेव । तथा सूक्तवाकप्रस्तरप्रहरणयो रुभयोरपि प्रयोजनवत्वा विशेषे केवलतृतीयाकृतमेव सूक्तवाकस्य प्रस्तरप्रहरणांगत्वं । अतश्च सत्यापि द्वितीयाश्रुतिप्रामाण्येनिष्प्रयोजनत्वा त्सक्तुष्वपवादः । सत्यांपिच तृतीयाप्रामाण्ये दृष्टार्थत्वा त्प्रयाजशेषाभिघारणस्यहे पवाद । अत स्सिद्ध मदृष्टार्थत्वेपि सम्मार्गादीनां गुणकर्मत्वम् ।

स्रुवन्तु नाद्रियेता गुणत्वपरा, अपितु प्राधान्यपरा, तदर्थत्वेन स्मृत्या नुशिष्टत्वात्, 'लोकवत्' – लोकसिद्ध घटादिपदवदनुशिष्टार्थ प्रतिपादकत्वस्योपपत्ते नचैवं सक्तुष्वपि तदापत्ति तेषां त्रिप्रयोजन कत्वात् प्रकृते तु तेषां स्रुगादीनां कुतो शेषभावावगमात् प्रयोजन परत्व सिद्धे र्युक्त गुणकर्मत्वमिति व्याख्येयम् ।

प्रयोजन स्रुगुदाहरणपूर्वपक्षे सम्मार्गसाधनीभूत स्रुवा प्रकृतौ विवक्षितसत्वत्वात् कपिञ्जलाधिकरणन्यायेन त्रित्वस्यैव शास्त्रीयत्वा त्पश्वादौ स्रुग्विवृद्धावपि त्रिस्त्रएव सम्मार्ष्टव्या', सिद्धान्तेतु सर्वकार्य त्वात् सर्वापव सम्मार्ष्टव्या परिध्युदाहरणेप्येकस्यैव परिधे पूर्वपक्षे सम्मार्ग, तैत्तिरीयशाखास्थ बहुवचनान्तवाक्योदाहरणतु सर्वाणां सिद्धान्तेतु यावत्परिधि अग्नेरपि पूर्वपक्षएकस्यैवाहवनीयस्य, सिद्धा न्तेत्वा हवनीयवृद्धौ सर्वेषाम् । यत्तु वार्तिके 'पूर्वपक्षे अग्नि मुप निधाय स्रुचःसहितस्य लौकिकस्याग्नेस्सम्मार्ग, सिद्धान्तेत्वाहवनीया दीनां सर्वेषा' मिति प्रयोजनमुक्तम्, तदग्नि सम्मार्ष्टीत्यस्य कल्प सूत्रकारवचनस्य मूलभूतश्रुत्या आहवनीयमात्र विषयिण्यानुपसंहाराभि प्रायेण, यदातु तेनाहवनीयमात्र विषयेण सामान्यवाक्यस्योपसंहार तदा सिद्धान्तवत् पूर्वपक्षेप्याहवनीयस्यैव सम्मार्गः सिद्धान्तेपि च गार्ह पत्यादीनाम सम्मार्गात्पूर्वोक्तमेवप्रयोजन द्रष्टव्यम् । एव पुरोडा शोदाहरणेपि पूर्वपक्षएकस्यैव, सिद्धान्तेतु सर्वेषां पर्यग्निकरणमिति द्रष्टव्यम् । तथा शाक्यानामयनेतरसमया स्सवनीया पुरोडाशाभव न्त्यत्र पूर्वपक्षे पर्यग्निकरणार्थत्वेन पिष्टमय पुरोडाशस्सम्पादनीय, नच तत्रापि पुरोडाशोद्देशेन मांसविधानात्सवनीय पुरोडाशवत् पर्य ग्निकरण पुरोडाशेपि मांसप्राप्त्युपपत्ते र्न पिष्टमयोत्पादन, तृतीये पुरोडाशपदस्य जघन्यस्य धानादिपञ्चके लिङ्गसमवायेन वृत्तिमङ्गीकृत्य सवनीयमात्रोद्देशेनैवेतर सविधानस्य वक्ष्यमाणत्वेन पर्यग्निकरणपुरोडाशे

सदप्राप्तेः । नचैवमपि सवन मध्यवर्तित्वेन तस्यापि सवनीय पदाभिधेयत्वोपपत्तेः मांसप्राप्त्युपपत्तिः, सवन मध्यवर्तिनि दधि णादानादौ सवनीय पदप्रयोगाभावात् योगरूढ्या सवनीयपदस्य धानादियागपञ्चक वाचित्वाव गतेः । अतश्च पर्यग्निकरण पुरोडाशे मांस प्राप्ते रभावात् पुरोडाशपदस्यच लोके पिष्टपिण्डवाचित्वात् पिष्टपिण्डरूप एव पुरोडाशस्त्वाश्रणीय. । तत्रापि च नर्माद्विमयत्व यवमयत्वयो नियत, प्रकृतौ ब्रीह्यादिवाक्ये पौर्णीयपुरोडाशोद्देशनैव तद्विधानात् । सिद्धान्ते त्र कल्प्य दर्शपूर्णमासप्रकृतिक सवनीययागपञ्चकोद्देशेन मांसविधा नात् प्रदेयपुरोडाशादिस्थानापन्नत्वात्तद्धर्मप्राप्ते पुरोडाशादि चतुष्टय स्थानापन्ने मांसे पर्यग्निकरण भवत्येव ।

यद्यपि च प्रदेयत्वेन मांसविधाना दवलोपात्तु नावदानपेषणादिधर्म प्राप्तिर्मांसे सभाव्यते, तथापि प्रकृतौ पर्यग्निकरणस्य प्रदेय पुरो डाशधर्मत्वावगते मांसे प्राप्त्यानायेवतत् । नचैव पचणमा दभावे तद् र्थाविधानमस्य धान्यमसीत्यस्यौ ह्यानुद्धविता नवमेनिराकरिष्यमाणा निर्विषयापत्तेतैनिवाच्य, तस्याः कृत्वाचिन्ताधेनोपपत्तेवक्ष्यमाणत्वात् ।

यत्तु न्यायसुधाकृता सवनीयपदार्थे वाक्ये अविवापप्राप्त्यभावेपि छान्दोग्यशाखास्थे एतेनचे गौरसीति शाक्यतरसमय पुरोडाशोपत्या शृत्या सर्वान्मुद्धिनाग्नौदिति वचन सवनीय पदाभावात् पुरोडाश पदेनैवच तत्कार्योद्देशे लक्षणापत्त्या पुरोडाशमात्रोद्देशेन मांस विध्यवगते मांसेन न पिष्टपिण्डरूप पुरोडाशस्य कर्तुमशक्यत्वेपि तरस पुरोडाशमत्र सरोधा दिति छान्दोग्य रूढ्वचनादवगिश्रितेन पुरोडाशापत्ते स्तद्वाधिदाप मांसौ तन्मन्त्रौहानूह चिन्तोपपत्तिरित्युक्त । तन्न, पुरोडाशपदेनाथ पिण्डमात्र वा प्रतिपाद्यते लक्षणया, पिष्टपिण्डोवा? नाद्य, लक्षणापत्तेः । नद्वि तीयः, तस्यान्नमात्रोपादानस्य मांसप्रकृतिकत्वानुपपत्ते । तस्मात्पिष्ट पिण्डप्रकृतिकस्यैव मांससंस्कारकत्वेन विधीयते । ततश्च " पयसामै त्रावरुण श्रीणाति " ति वत्ससंस्कारके तस्मिन् प्रदेयप्रकृतिधर्माणा

पेषणादीनां प्रमाप्तेर्नोहवि-तोपपत्ति । अतश्च कृत्वाचिन्तया द्वेनैव तदधिकरणोपपत्ति । ततश्च स्रवनीयपदार्पितवाक्ये पेषणाद्यप्राप्ताद्यपि पर्यग्निकरणप्राप्तिसत्त्वात् प्रयोजनोपपत्ति ।

यत्तु भाष्यकारेण स्रुगुदाहरणे पूर्वपक्षे वरुणप्रघासेषु शमीमय्य स्स्रुचो भवन्ति हिरण्मय्योवेतिवाक्योक्त शमीमयत्वादीनां प्रधानाङ्ग भूतस्रुगनुवादेनैव विहितत्वात् सम्मार्गाङ्गभूतस्रुक्षु प्रकृतिप्राप्तनाना वृक्षीयत्व, सिद्धान्तेतु स्रुक्कार्यत्वाच्छमीमय्यादीनामिवसमार्गं इति प्रयोज नमुक्तम् । तत्र, स्रुङ्मात्रानुवादेन शमीमयत्वविधाना त्प्रधानस्रुक्ष्विव च सम्मार्गस्रुक्ष्वपि शमीमयत्व प्राप्त । नच प्रियगुणप्रकरणा त्प्रधा नमात्रलाभ, प्रकरणस्य वाक्य सङ्कोचकत्वानुपपत्ते । प्रियगुणात्तु च रुद्देशेन विहितानामपि चरा प्रधानमात्रसम्बन्धित्वेन विधानायुक्त प्रधानमात्र गामित्वम् । अतश्च यथैव येषां हवींष्या सादयतीत्यादौ प्रधान प्रकरणेन हविश्शब्द सङ्कोचायोगा दानर्थक्य परिहारस्योप स्थित्यविशेषा दगप्रधानसाधारणो पूर्वसाधनी भूतहविर्मात्र लक्षणया प्युपपत्तनेर्वधादे प्रधानमात्रगामित्वं तथैव प्रधान प्रकरणेन स्रुक्छब्द सङ्कोचायोगा दति देशसङ्कोचेन च प्रधानवाक्येनोभयो रुपस्थित्यवि शेषा दुभयगत्व शमीमयत्वादीनां । नचातिदेशान सम्मार्गस्य कल्प्तोप कार नानावृक्षीय स्रुग्विशिष्टस्यैव प्राप्तत्वा त्तद्बाधाय स्रुक्पदस ङ्कोचोपपत्ति, प्राकृत नानावृक्षीयत्वा बाधाय स्रुक्पदसङ्कोचाङ्गीकारे अङ्ग गुणविरोधन्यायेन प्रधानस्रुक्षु नानावृक्षीयत्वानुग्रहेण सम्मार्गादिस्रुक्ष्वे व शमीमयत्वादि निवेशोपपत्त ।

वस्तुतस्तु " अप्स्वदवभृथेनचरन्ति " ति वद्दुपदेशेन प्रधानगता स्विव सम्मार्गगतास्वपि स्रुक्षु शमीमयत्वादि विधानात् प्रयाजादिगता स्विव तद्गतास्वपि प्राकृतनानावृक्षीयत्वबाधोगुणफल । नहीदं स्रुद्वात् वेदस्य स्वनप्राकृतानेषद्वात्तत्वफलत्वध प्रयागविधिद्वारक प्रधानाश्रि तमगोस्वचनस्ति येनातिदेशापेक्षया दौर्बल्यंस्यात् । अन्यथानस्याप्

रण स्रुड्मात्रानुवादेन विधाना दर्पामिवास्या ध्यौपदेशिकत्वात्प्राबल्य मिष्टमेव । अतश्च यथैव प्रयाजादिस्रुक्षु शमीमयत्वप्राप्ति रुपपादनी या, तथा सम्मार्गस्रुक्ष्वपीति नास्य प्रयोजनत्वोपपत्तिः ।

यत्तु वार्तिकेऽभ्युपगम्यापि यथा कथंचि च्छमीमयत्वादेः प्रधान सम्बन्धं न सम्मार्गस्रुक्षु नानावृक्षीयत्व प्राप्तिस्संभवति, प्रधान स्रुग्भिरेवां गानामपि प्रसंगा त्कार्यसिद्धेः स्वतन्त्रस्रुगाक्षेपकत्वानुपपत्तेः, अतश्च यथैव दक्षिणास्सोमस्येति वचनात्प्रधानमात्रांगभूतयापि दक्षिणया प्रसंगा त्कार्यसिद्धे र्नांगभूतेष्टिपशु ष्वातिदेशिकान्वाहार्यदक्षिणाप्राप्ति रिति द्वादशे वक्ष्यते, तथैव प्रधानस्रुग्भिरेव प्रसंगसिद्धेर्नसम्मार्गार्थं नानावृ क्षीयस्रुगुत्पादनमिति दूषणान्तरमुक्त । तत्र, सौमिकपात्रैरैष्टिकपात्रकार्यस्ये व शामित्राग्निना पौरोडाशिकाग्निकार्यस्य पाकस्येवात्र सम्मार्गस्य प्रधानस्रु ग्भिस्सिद्ध्यनुपपत्तेः । दक्षिणायाश्चानतानां कर्तृणा मप्रधान साधारण्या दानतिरूप कार्यसिद्धेः प्रत्यक्षावा दुक्त्वा तत्साधनीभूतान्वाहार्यनिवृत्तिः, प्रकृतेतु स्रुग्भि प्रधाननिष्पत्त्या सम्मार्गानिष्पत्ते स्सम्मार्गस्य पृथगनुष्ठेय त्वाद्युक्तमैष्टिकपात्रवत्स्वांगभूतस्रुगाक्षेपकत्वम् । नच यथा सोमागभूत महावेद्यैवैष्टिक हविरासादनादिकार्यस्य पृथगनुष्ठेयस्याप्यनुनिष्पादना त्तदंगभूतदार्शपूर्णमासिक वेदिनिवृत्ति द्वादशे वक्ष्यते तथात्रापिसम्मा र्गस्य पृथगनुष्ठयत्वेपि प्रधानस्रुग्भिरेव निष्पादनोपपत्ते र्नेतानावृक्षीयत्व प्राप्तिरितिवाच्यम् ; सौमिकवेदेर्देशत्वेनांगप्रधानार्थत्वस्य तृतीयेव क्ष्यमाणत्वा द्धविरासादनादिद्वारांगत्वेन तस्या एवप्राप्तेः अतिदेशि कैष्टिक वेदेरुपदेशेन बाधोपपत्तेः । नचैवं वेदेस्तत्प्रत्यापत्तेर्द्वादशोक्त प्रसंगानुपपत्तिः, तस्य इयतिशक्ष्यामहेस्यां कर्तुमित्यर्थवादिक कर्तृग मनागमनादि रूपप्रचारार्थत्व कृत्वाचिंतया कर्तृप्रचारार्थाया वेदेर्हवि रासादन सिद्ध्यंगीकारेण वक्ष्यमाणत्वात् । नचैवमपि पात्रन्यायेन हविरासादनरूपस्य कार्यस्य पृथगनुष्ठेयत्वा त्प्रसंगोपपत्तिः, कर्तृप्रचा रार्थमनुष्ठितेनैव सौमिकवेदिकरणेना दृष्टविशेषावच्छिन्नादवनीय प्र

न्यग्देशरूपाया वेदेस्सिद्धत्वा दैष्टिकवेदिकरण निवृत्त्याप्रसङ्गोपपादनात् । नह्यैष्टिक सौमिक वेदिकरणभेदे वेदिभेदस्समस्ति, न्यग्देशस्य प्रत्यक्षैकत्वा द्वेदिपदस्य नानार्थकत्व कल्पनायोगात् अदृष्टस्या प्येकस्यैव कल्पनाच्च । अतएवतत्तत्क्रत्वपूर्वसाधनीभूतवेदिरूपादृष्टत्वेनैव तत्तद्वेदि करण प्रति कार्यत्वा द्व्यभिचारस्सङ्करोवा नाशंक्य । पात्नेयुतु सौमिका पेक्षया पैष्टिकाना भेदस्य संपादयितु शक्यत्वा त्प्रसङ्ग इति वैषम्यम् । अतश्च पाशन्यायेन प्रधानस्यापेक्षया समार्गस्त्रुचोभेदेन कर्तुं शक्यत्वाच्च प्रस ङ्गोपपत्तिः । नच प्रसङ्गासंभवेप्याग्नेयीन्यायेन प्रकृतानामेवा पोद्धानाशङ्का तस्य प्रकृतिप्राप्तनाना वृक्षीयत्व बाधकत्व वैगुण्यप्रसङ्गेनानुदयात् । अतश्च वार्तिके प्रसङ्गापादनमनास्थ येवेति द्रष्टव्यम् ।

इदन्त्विहवक्तव्य, यथाग्नि च्छभीमयत्वादेः प्रधानमात्र सबन्धा भ्युपगमे प्रकृतौ नानावृक्षीयत्वस्यापि प्रधानमात्र सबंधापत्ते स्सम्मार्ग स्त्रुक्षु नानावृक्षीयत्वस्यैवा भावा द्भाष्योक्तप्रयोजनानुपपत्तिरिति ।

एतेन यदपि परिध्युदाहरणे बाणवत' परिधयोभवन्तीत्यत्र पूर्व पक्षे सम्मार्गार्थे पाठाशाठापादयितव्या, सिद्धान्तेबाणवत्तामव सम्मार्ग इत्युक्त प्रयोजनमपास्त, बाणवत्वस्याग प्रधानसाधारण्येन विधाना दन्यथापाठादावस्यापि सम्मार्ग परिधिष्वप्राप्ते । किंच परिधीन् सम्मार्ष्टीत्यत्र परिधिशब्देन परिधीयते अनेनेति व्युत्पत्त्या अग्निपरिधानो पलक्षित द्रव्याभिधाना त्पुरोडाशकपालान्यायेन पाठाभावप्रयोजकत्वा द्वोक्तप्रयोजनसिद्धि ।

यदपि त्याग्न्युदाहरणे अप्याचभृथेन चरन्तीत्यत्र पूर्वपक्षे सम्मार्गोग्ने कर्तव्य सिद्धान्ते त्वप्सामिति प्रयोजनमुक्तम्, तदपि अव भृथे तस्यापूर्वत्वेन तदर्थ श्रूयमाण प्रयाजानूयाजाद्यर्थवा आराद्रुपकारक सम्मार्ग प्राप्त्यभावाद्यथाकर्थंचित्प्राप्त्यङ्गीकारेपि तृतीयावेन अवभृथपदेन साङ्गस्यैवकरण त्वाभिधानात्प्रत्तीयनेन च सामर्थ्यैव प्रयोगविधाना दपो

च्चदेशत्वा स्तांगप्रधानविषयत्वस्यैकादशे वक्ष्यमाणत्वात् सम्मार्गस्यापामेव प्राप्तेरुपेक्षणीयम् । अतः पूर्वोक्तान्येव प्रयोजनानि द्रष्टव्यानि ।

## इति सम्मार्गाधिकरणम् ॥ ४ ॥

---

## अथ स्तोत्रादि प्राधान्याधिकरणम् ।

॥ १ ॥ सू – स्तुतशस्त्रयो संस्कारो याज्यावद्देवताभिधानत्वात् ॥

॥ २ १ १३ ॥

इह स्तोत्रशस्त्राण्युदाहरणं । तत्र प्रगीतमंत्रसाध्य गुणगुणिसंबंधकीर्तनं स्तोत्रं, शस्त्रं च तदेवाप्रगीतमन्त्रसाध्य । तत्र किं तयो रारादुपकारकत्व प्रयाजादिवत्, उतदेवतादिरूप गुणिस्मरणार्थत्वेन सन्निपात्योपकारकत्वमिति विचारः । अत्र पूर्वभेदोपयोगित्विचिन्तना त्पादाध्यायसंगतिः पूर्ववत् । अनन्तरातु पूर्वाधिकरणे श्रुतिग्रहणस्य द्रव्यागताबोधकप्रमाणमात्रोपलक्षणत्वादिहापिगुण्यगताबोधकलिंगसद्भावेन पूर्वपक्षकरणादापवादिकी ।

तत्र यद्यपिविषयतासंबंधेन गुणगुणिनोरुभयोरपि सम्बन्ध कीर्तनात्म स्तोत्र शस्त्र प्रति करणत्वमस्ति, तथापि प्रयोजनापेक्षायां दृष्टविधया कर्मानुपयुक्तगुणप्रकाशनार्थत्वायोगेपि कर्मोपयुक्तगुणिस्मरणार्थत्वसंभवे अदृष्टार्थत्व कल्पनानुपपत्ते गुंणिस्मरण रूपसंस्कारार्थत्वमेव याज्यादिव स्तोत्रशस्त्रमंत्राणामंगीकर्तव्यम् । नचात्र स्तौतिशंसतिभ्यां विनियोगेन याज्यादिवैलक्षण्ये स्तौतिशंसत्योश्चगुणविशेष्यक गुणिसंबन्धकीर्तनवाचित्वस्य लोके प्रसिद्धत्वा द्गुणिप्रकाशनार्थत्वे च तस्यैव विशेष्यत्वेन तयोर्लक्षणापत्ति रितिवाच्यम्, प्रयाजशेषेण हवींष्यभिघारयतीतिवद्दृष्टार्थत्वानुरो

धेन लक्षणागोचारस्य न्याय्यत्वात् । अतस्सन्निपत्योपकारकत्वमेव स्तोत्र शस्त्रयोरपि । सूत्रनिगदव्याख्यातम् ।

॥२॥सू — अर्थेन च पकृष्येत देवतानामचोदनार्थस्य गुणभूतत्वात् ।

॥ २ १ १४ ॥

अस्तुताव न्मूलयुक्तिभूत श्रुतिविरोधो लिंगस्य बाधक, अभ्युच्चय युक्तिरूपो दुर्बलप्रमाणबाधप्रसङ्गएव तावदादावभिधीयते । यादिहिस्तो त्रिशस्त्रयो प्रधानप्रलक्षणार्थता मङ्गीकृत्य सन्मन्त्राणा गुणिस्मरणार्थत्वमि ष्यते ततामहदैदेवताकयागाभ्यासक्रमेपठितयो रैन्द्रमन्त्रयो र्महेन्द्रप्रकाश नाद्यादके रिंद्रस्यच यागानगत्वेन प्रकाशानार्हत्वा त्प्रकरणेन यत्रैंद्रदेवता तत्रोत्कृष्येत यूथानुमत्रण मन्त्रवत । ततश्च यजुर्वेदविहितग्रहयागाभ्यास क्रमेण सामवेदान्तर्गतोत्तरा ग्रथपठिताना मृचा यथाक्रमपादनाय गवांगभा वानां मध्येऐन्द्रमन्त्रया स्सदनगीकारात्क्रमबाधापत्ति । पाद पुनरा रभतइति वचनावगतस्य चाद्यामृच सकृत्पठित्वा वस्यात्यपादेनसहद्वितीयामार्धर्च पठित्वा तदत्यपादेन सहद्वितीयात्यार्धं र्चपठनरूपस्य प्रग्रथनस्य माहेन्द्रग्रहसन्निधाचाम्नातस्य तदगत्वानगीकारा त्सन्निधिबाधश्च । अतश्च दुर्बलया रपि क्रमसन्निध्यो प्रबलनापिलिंगेन सहाबाधेनैवोपपत्तौ बाधायोगा सन्निपत्योपकारत्व स्तोत्रशस्त्राणां । सूत्रतु देवतापद मति गुणत्वेन सयुक्ता यदि स्तुतिभावना ततोर्थेन प्रयोजनानुरोधेन माहेंद्रप्र इयजितोपकृष्येतेंद्रीस्तुति, तस्या प्रयोजनभूता देवतां प्रतिगुणाथादिति व्याख्येयम् ।

॥ ३ ॥ सू — वशावद्वागुणार्थं स्यात ॥ २ १ - १५ ॥

नापकृष्येतैंद्रीस्तुति, इन्द्रशब्देनैव प्रकृतग्रहयागीयेंद्र प्रकाशनोप पत्ते यद्यपि च तत्र महत्त्वगुणविशिष्टस्यैवेन्द्रस्य माहेन्द्रमिति त द्धितेनदेवतात्वमुक्तं, तथापिविशेष्यस्यैव मन्त्रेण प्रकाशनोपपत्ते विशे

षणांशस्यचमंत्राभावेपि ध्यानाद्युपायांतरेण स्मृतिसिद्धे नापकर्षापत्तिः । नादि"सावा एषासर्वदेवत्यायदजावशा ।" "वायव्यामालभेते"ति वाक्येन वशायाबगुणविधानेपि विशेष्यमात्रस्य छागस्यवपायामेदस इतिमंत्रे णाभिधान नेष्टं । नह्यत्रमहेंद्रशब्दस्यैव देवतात्वं, येनेन्द्रशब्दस्य ततोभिन्नत्वेना पकर्षःशक्येत, तथासति महेद्रशब्दस्यार्थवत्वाभावेन प्रातिपदिक संज्ञाभावात्तद्धितानुत्पत्ति प्रसंगात् । अतएव चेतनाचेतन साधारण्येनार्थ स्यैव देवताव इत्यमे वक्ष्यते । एवं सत्यपि यदिमहेंद्रशब्दोरूढ्या अर्थांतरवचनःस्या ततोर्थांतरवचनेनेंद्रशब्देन नाभिधीयते तदर्थ इत्युत्कृष्येतैद्रोमन्त्रः, मोक्षणीशब्दवत् क्लृप्तावयवयोगेनोपपत्तौ नार्थांतरक ल्पनाया प्रमाणमस्ति ।

ननु तद्धितसमासरूपवृत्ति द्वयानुपपत्तिरेव रूढिकल्पनायां प्रमाणं भविष्यति । तथाहि – नतावदेकस्यैवेन्द्रशब्दस्य युगपत्तद्धितसमासरूपवृत्तिद्वयसम्भवः, अन्यतरसापेक्षत्वेनैकस्या अपि वृत्तेरनुपपत्तेः, समासवृत्त्यर्थ मिन्द्रशब्दस्य सुबन्तत्वकल्पना तद्धितवृत्त्यर्थं वा सुबन्तत्वमिति युगपद्वृत्तौ युगपत्सुबन्तत्वा सुबन्तत्वविरोधापत्तेश्च । नापिक्रमेण, सकृच्छ्रुतस्येन्द्रशब्दस्या वृत्त्यापत्तेः । तद्धितपूर्वमवृत्तौमहेन्द्र मित्युत्तर पदवृद्धि र्महत्वस्यप्रधानभूतद्रव्यविशेषणत्व बाधक प्रसज्येत । अतो वृत्तिद्वयानुपपत्त्या अश्वकर्णादिशब्दव द्रूढिकल्पनोपपत्ते रिन्द्रान्महेन्द्रस्य भेदावगमात् इन्द्रशब्देनप्रकाशनानुपपत्ते रुत्कर्षानिवारणमिति चेत् ? समासवृत्युत्तरकाल तद्धितवृत्त्यगीकारात् । नचैव मिन्द्रपदावृत्तिः, वृत्तिद्वयविवरण वेळायां पौरुषेयेन्द्रपदावृत्तावपि वैदिकमाहेन्द्रपदेनानावृत्तेनैव महत्वगुणविशिष्टेन्द्रदेवताविध्युपपत्तेः । अतएव तद्धितवृत्तेः पूर्वं द्वन्द्वादि समासांगीकारात् " आग्नावैष्णव " मित्यादौ देवताद्वन्द्वादि निमित्तकानङाद्युत्पत्ति राजसूयेनोपपादिता भविष्यति । अतश्चक्रमेण वृत्तिद्वयस्याप्युपपत्तेः मोक्षणीशब्दवत्क्लप्ता वयवयोगेनोपपत्ते रूढिकल्पना

नचैतावतापि गुणविशिष्टस्येन्द्रस्य देवतात्वे यथावदिन्द्रशब्देनविशि ष्यमाणप्रकाशनोपपत्ते र्नोत्कर्षापत्तिः ।

वस्तुतस्तु महेन्द्रप्रातिपदिकेन महत्त्वविशिष्टे इन्द्रे उक्तेऽपि राजपुरु षशोभनइति यद्विशेष्यमाणस्यैव तद्धितेन देवतात्वावगमाद्विशेषणस्य च महत्पदस्य विशेष्योपलक्षणार्थत्वेन स्तावकत्वेनोपपत्ते र्देवताभूतस्य शुद्धस्येन्द्रस्यैन्द्रेण प्रकाशनोपपत्तौ नोत्कर्षापत्ति ।

सूत्रन्तु अगुणार्थं स्यादित्यकार प्रश्लेषेण व्याख्येयम् ।

॥ ४ ॥ सू नश्रुतिसमवायित्वात् ॥ २ - १ - १६ ॥

नेन्द्रशब्देन प्रकृतग्रहसम्बन्धिदेवताभिधानं, प्रकृतग्रहेणाहेन्द्रमिति तद्धितसहकृतेन विधिना महेन्द्रपदस्यैव देवतात्वविधानात् । तथा हि- तद्धितेन देवतात्वविशिष्टद्रव्याभिधानात् देवतात्वस्य च त्यज्यमानद्र व्यविरुद्धत्वेन शुद्धव्यवहारे प्रसिद्धस्यानुष्ठायैर्यै ऽसम्भवात् तद्धिता भिहितोद्देश्य वाक्यार्थं महेन्द्रप्रातिपदिकेन लक्षणया महेन्द्रपदमभि धाय तस्य त्यज्यमानद्रव्यविरुद्धदेवताख्य देवतात्व विधीयते । महेन्द्रशब्दे पदलक्षणायाश्च शक्यसम्बन्धविनानुपपत्त महेन्द्रपदशक्य श्वेताश्वेतन साधारण्येन दशमे वक्ष्यमाणोऽर्थोऽपि नालगतः । अतश्च महत्त्वगुण विशिष्टे न्द्रवाचकमहेन्द्रपदस्यैव देवता वाचकतया विशिष्टवाचकशुद्धवज्रादि पदा न्तरप्रयोगे सुतरां शुद्धेन्द्रपदप्रयोगायोगा सन्नपदेन प्रकृतग्रह सम्बन्धिदेवताप्रकाशनोपपत्तिः ।

यत्तु - न्यायसुधाग्रन्थस्वारस्यात् प्रातिपदिकेनार्थवाचिना एवमुद्देश्या न्वयार्थं पदविशिष्टार्थलक्षणामङ्गीकृत्य तत्र तद्धितवाच्य देवतात्वान्वयो गौरवाच्छन्दोपदिष्टेयो देवतेतिप्रतीयते, तत्पदविशिष्टेऽर्थे उच्चार्यत्वाख्यो द्देश्यत्वस्य बाधाद्विशेषणीभूतपदान्वयस्य चान्योपसर्जनमन्येन नान्वे तीतिन्यायेना नुपपन्नत्वा दुपेक्षणीयम् ।

एतेनार्थस्यैव देवतात्वेपि तस्य ब्राह्मणादिव स्वरूपेण यागोपयोगा भावा च्छब्दोच्चारणद्वारेणैवोपयोगावगते शब्दविशेषापेक्षाया ऽ

यवादुपस्थितस्य विधिगतशब्दस्यैव नियमइति पक्षोपिप्रयुक्तः, तद्धिता र्थस्य त्यज्यमानहविरुद्देश्यत्वाख्यस्यार्थे बाधेनान्वयानुपपत्ते, त्यज्यमान हविरुद्देश्यभूतशब्दाभिधेयत्वलक्षणात् प्रधानभूते तद्धिते लक्षणापत्ते रयु क्तैव। तद्वर प्रातिपदिकएव गुणभूते पदलक्षणेति ।

किंचैवं " अग्नयेपावकाये " त्यादा वेकस्यैव पदस्योच्चारणनियमो पपत्तेः न पदद्वयोच्चारणापत्तिः अतो महेन्द्रपदस्योच्चार्यत्वेन देवतात्वा न्नैन्द्रमन्त्रेणाभिधानोपपत्तिः, अतश्चोत्कर्षापत्ति स्तदवस्थैव ।

सूत्रन्तु-श्रुत्या-विधिगत शब्देनैव, देवताया , कर्मणि, समवायात्- सम्बन्धादिन्द्रशब्देन महेन्द्रप्रकाशनानुपपत्ते र्ना नुत्कर्ष सम्भवइति व्याख्येयम्।

॥ ५ ॥ सू - व्यपदेशभेदाच्च ॥ २ - १ - १७ ॥

इतश्च नैन्द्रपदेन महेन्द्राभिधानं । अन्यथा सान्नाय्ये "वहुदुग्धीन्द्राय देवेभ्यो वहुदुग्धि महेन्द्रायदेवेभ्य " इति द्वयोर्मन्त्रयो स्समाम्नातयो रन्योन्य प्रकाशकात्वे विकल्पापत्तिः । अस्मन्मते त्वैन्द्रेण सान्नाय्य गतेन्द्र प्रकाशना न्माहेन्द्रेणच तद्गतमहेन्द्रप्रकाशना न्मन्त्रद्वयव्यपदेशव्यवस्थेति न विकल्पः । अतश्चे न्द्रमहेन्द्रयो रधिष्ठानैक्येपि विशेषणांशभेदादुद्दे श्यशब्दभेदाच्च भेदावगमे नैन्द्रमन्त्रेणाभिधानानुपपत्ते रुत्कर्षो निवारणम् ।

॥ ६ ॥ सू गुणश्चानर्थकस्स्यात् ॥१–१ १८॥

यदप्युक्त महेन्द्रप्रातिपदिकेन महत्त्वविशिष्ट इन्द्रे भिहितेपि रा जपुरुषन्शोभन इतिव द्विशेष्यमात्रस्यैव तद्धितार्थान्वय इति । तन्न,तथा सति गुणवाचिमहत्पदानर्थक्य प्रसगात् । नहि तस्य राजपदवदर्थ द्वारेणोपलक्षकता संभवति, देवतायास्स्वरूपेण कर्मण्य सबन्धात् । किंतुशब्दोच्चारण द्वारातदुपकारकत्वात् । महत्पदस्यापि तद्वारैवो पलक्षकता वाच्या । ततश्च तस्याप्युच्चार्यत्वात् देवतात्वा वगत्यवगते र्नमहत्त्वरहितस्येन्द्रस्य तद्धितार्थान्वयस्सभवति । किंच सभवति वि धेयद्र विशेषणत्वेनार्थवत्त्वे उपलक्षणत्वस्य स्तावकत्वस्य चान्याय्यत्वाच्च

शुद्धस्यैंद्रस्य देवतात्वं । राजपुरुषश्शोभन इत्यादौतु प्रमाणांतरानुरोधेन तथांगीकरणमिति न किंचिदेतत् । अतएव च सान्नाय्ये "ऐंद्रं दध्य मावास्यायामैंद्रंपयोमावास्यायां माहेंद्रं दध्यमावास्यायां माहेंद्रं पयोमा वास्याया"मिति व्यपदेशभेदः । अन्यथा तत्रापि महत्पदानर्थक्यम् ।

॥७॥ सू — तथा याज्यापुरोरुचोः ॥२ - १ - १९॥

तथाचाज्यस्य एवेंद्र महेंद्र देवत्ययाज्यापुरोनुवाक्ययो भेदेनाम्नान मपींद्रमहेंद्रयो भेद एवावकल्पते, अन्यथा एकेनकार्यसिद्धे रितराम्नान मन र्थकं विकल्पोवा प्रसज्येत । नच भवन्मतेप्येकापूर्वसाधनतया इंद्रम हेंद्रयो धर्मसाकर्यापत्ते विकल्पानिवारणम्, सम्मार्जनादिष स्वविनियत निर्देशेन साकर्यानापत्ते ।

वस्तुतस्तु – मन्त्राणां लिंगेन मुख्यपदार्थे विनियोगा द्व्रीहिणा मेधसुमनस्यमान इति वदेकापूर्वसाधनीभूते व्यथान्तरे प्रमाणाभावेन सांकर्यप्रसंग एव नास्ति । अतो याज्यापुरोनुवाक्ययो भेदाम्नानमपि देवता भेद साधकम् । सूत्रे पुरोरुक्छब्द श्शस्त्रगत मन्त्रविशेषवाच्य पि लक्षणया पुरोनुवाक्यापरो द्रष्टव्यः ।

॥८॥ सू - वशाया मर्थसंयोगात ॥ २ - १ - २० ॥

यातु – पशात्व गुणविशिष्टद्रव्यविधानेपि छागशब्देन विशेष्य मात्र प्रकाशनं दृष्टमित्युक्तं, तद्वशात्वस्य स्वरूपतएवोपकारकतया द्रुपा दानान्तरेणापि स्वाध्यायकर्मण्यनुष्ठानोपपत्ते नावश्यं शब्दोच्चारणापेक्षा । प्रकृतेतु महत्त्वस्य महत्पदोच्चारण द्वारेणैवोपकारकतया त्वानुच्चरितस्य साधनत्वं संभवतीति विशेषः ।

॥९॥ सू - यत्रेतिचार्थ वत्वास्यात् ॥२ १ — २१॥

[1] ननु – यत्रमाहेंद्रग्रहस्सन्निधावय मैंद्रः प्रगाथः पठितः, तत्रैवास्य म, मैतास्याग्निपदवल्लक्षणया महत्त्वविशिष्टेंद्र प्रकाशकत्वेन विनियोगकल्पनाद

र्थवत्त्वोपपत्तिः । वस्तुतस्तु नेदृशस्थले लक्षणा यागवेळायां महेंद्रपद प्रयोगेपि मंत्रविशेष्यभूतेन्द्रमात्र प्रकाशनेन मंत्रस्या पूर्वीयदेवतात्वाश्रयभूतेंद्र प्रकाशनार्थत्वेनाप्युपपत्तेः; मनोतास्याग्निशब्देतु देवतावाचि मनोतापदसामानाधिकरण्येन लक्षणांगीकरणमित्युक्तं मंत्राधिकरणे । तत श्च यथापठितस्याप्युपपत्ते नोत्कर्षापत्तिः । अथवा पूषानुमंत्रणमंत्रवद्दुर्बल प्रमाणबाधेनोत्कर्षांगीकारेपि न क्षतिः । नच तत्र यागानुमंत्रणमंत्रसमाख्याव[दि]ह सम्बन्धसामान्यबो[बा]धक प्रमाणाभावेनो त्कर्षस्या प्यनुपपत्ते रानर्थक्यापत्तिः, एद्रयागांतरे तदभावेपि ज्योतिष्टोमप्रकरणस्थैंद्रग्रहाभ्यासे प्रकरणस्यैव सामान्यसम्बन्धबो[बा]धकस्य सत्त्वेनोत्कर्षोपपत्तेः । अतश्च यत्र प्रकरण एवेंद्रयाग स्तत्रास्य मंत्रस्यो त्कर्षे प्यर्थवत्त्वोपपत्तिरिति ।

॥१०॥ सू — नत्वाम्नातेषु ॥ २ - १ - २१ ॥

नचैंद्रस्य मंत्रस्य प्रकरणे उत्कर्षसंभवे प्यन्येषु तत्तद्ब्राह्मणसन्निधा वाम्नातेषु मंत्रेषु " याम्यांशंसति शिपिविष्टवतींशंसति पितृदेवत्यां शंसति कुसुंभकसूक्त मन्वाह अक्षिसूक्तमन्वाहमूषिकसूक्तमन्वाह"इत्यादिविधिविहितेषु प्रकरणेपि यमादीनाम भावा त्तत्रोत्कर्षानुपपत्तेः, प्रकरणबहिर्भूत यमादिदैवत्यकर्मणि च सामान्यसम्बन्धबोधक प्रमाणाभावेनो त्कर्षानुपपत्तेः, कुसुम्भकादीनां चान्यत्रापि देवतात्वाभावेन सुतरां तदनुपपत्ते र्नार्थवत्त्वोपपत्ति रिति वाच्य,

॥११॥ सू — दृश्यते ॥२ - १ - १३॥

सर्वेषा मेवार्थवत्वोपपत्तिः । तथाहि – मण्डूकसूक्तस्य तावद्" मण्डूकेनाग्निविकर्षती " ति विहितमण्डूक प्रकाशकत्वेनाग्न्यनुयाग । नच तस्या नारभ्याधीतत्वेन सामान्यसम्बन्धबोधक प्रमाणाभावः, मण्डूकसूक्तस्य प्रकरणाज्ज्योतिष्टोमसंबंधे अवगत आनर्थक्य तदंगन्यायेन तदंगभूतेचयने निवेशोपपत्तेः । एव मूषिकासूक्तस्यापि

प्रकरणाज्ज्योतिष्टोमाङ्गभूतयूपैकादशिन्यां निवेशः । तत्र च यद्यप्य
र्थं साक्षाद्विनियोगः, तथाप्युपशयेयूपे " सर्वेवा अन्येयूपाः पशुमन्तो
अथोपशयएवा पशुरि"त्युपक्रम्य द्वेष्याभावे 'आखुस्तेपशुरिति ब्रूयादि" ति
मन्त्रविधानेनाखुस्मृति द्वारा लक्षणया तत्सम्बन्ध्युपशयस्तुतिरिति द्रष्टव्यम् ।

येतु याम्यादिमन्त्रास्तेषां प्रकरणे क्वचिदपि निवेशासम्भवेनोत्कर्षा
योगात् दन्त्यन्तरसामान्यसम्बन्धबोधक प्रमाणाभावेनैव तदप्रसक्तेः एतासां
प्रकृतग्रहदृष्टतैव लक्षणयैपैव प्रकाश्यते । प्रयोगाभावेन निषिद्धल
क्षणानङ्गीकारेतु जपादिमन्त्रवद् याम्यादिमन्त्राणां मप्यदृष्टार्थं मुच्चारण मप्रकृ
तग्रहे यागाङ्गत्वेन विधीयते । अस्मिंश्च पक्षे स्तौतिशंसत्यो गुणिवि
शेष्यक प्रकाशनलक्षणत्वाभावेऽपि लक्षणयोच्चारणपरत्व मेव द्रष्टव्यम् ।
यदि त्वस्मिन् पक्षेऽदृष्टार्थत्वस्या वश्यकत्वे लक्षणाङ्गीकारे प्रमाणाभाव
श्चाक्षेपः, ततो याम्यादिविषये गुणविशेष्यक गुणिसम्बन्धकीर्तनात्मक
स्तोत्र शस्त्रविधान मेवा दृष्टार्थ माक्षिप्यते । अथैतावता सर्वत्रैव
तथा प्रसङ्गः, अनुपपत्तेरभावात् । नच याम्यादिमन्त्रेषु तत्तन्मन्त्रव
र्णितदेवताङ्गीकारेण तद्विषययागान्तरस्यैव कल्पयितुं शक्यत्वात् किमिति
सिद्धाभ्युपगमेन स्तोत्रशस्त्रादृष्टार्थताङ्गीकरणमिति वाच्यम्, याम्यादि
मन्त्रे स्तुतिभागित्वरूप देवतात्व कल्पनेऽप्याधारयद्रव्य सम्बन्धाभावे
हविर्भागित्वरूप देवतात्वाकल्पनात् तदेकरूप्य यागानुमानानुपपत्तेः ।
अतएव जपादिमन्त्रेषु न यागान्तरकल्पनम् । किन्त्वदृष्टार्थत्वमेव ।
नचान्येषु जपादिमन्त्रेष्व दृष्टार्थत्वेप्यत्र 'यज्ञस्य साधनताम्यापदयेत अन्ता
देवा अवन्तु इतिजपत अपिवान्यविष्णवोमि " त्यादौ विष्णु
प्रकाशकस्य मन्त्रस्यापांशुयाजाङ्गत्वेन विहिताकर्ष विहितकर्मणि
मान्त्रवर्णिक देवताकल्पकत्वेनोपपत्ते किमित्यदृष्टार्थत्वाङ्गीकरणमिति
वाच्यं, विधिवाक्यादेवैतस्य मन्त्रस्य यज्ञसाधन लोपनिमित्त वैगुण्यसमा
धानार्थत्वे नावगतत्वादर्थान्तराकाङ्क्षानुपपत्तेः । अतोजपादि मन्त्रवदेवया
म्यादिमन्त्राणाम दृष्टार्थत्वसिद्धावप्यभिमत स्तुतरूपत्वमेवाङ्गीकर्तव्यम् ।

यत्तु- मूले "वाचस्तोमे सर्वा ऋचस्सर्वाणि यजूंषि सर्वाणि सामानिपारिप्लवंशंसती"ति विहिते शंसे सर्वेषां मन्त्राणां विनियो गाद्याम्यादीनामपि तत्रैवोत्कर्षः । यद्यपि च तत्र दृष्टविधयानोपयोगः, तथाप्य दृष्टद्वारैव तदुपपत्ति " रित्युक्तं । तद्वाचस्तोमेप्य दृष्टार्थतावश्यकत्वे याम्यादीनामपि सान्निध्याबाधार्थं प्रकृतग्रहएव अदृष्टार्थत्वस्यापत्वादुपेक्षितम् । यदितु वचनेन सान्निध्यबाधान्न प्रकृतग्रहसंबन्ध इत्याशक्येत, ततो दर्शपूर्णमास प्रकरणपठितानां जपादिमन्त्राणामन्येषां च लिंगादिविनियुक्तानां वचनेन लिंगादिबाधापत्तेर्न तदंगत्वसंभवः । अथतु वाक्यस्यापि सामान्यविषयस्य विशेषनिष्ठलिंगादि बाधकत्वायोग इष्येत, ततस्सन्निधावपितुल्यम् । तस्मात्पूर्वोक्त विधयैवार्थवत्त्वदर्शन स्याश्रयेयम् ।

॥१९॥सू — अविप्रतिषिद्धो वा प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम् ॥२ - १ - २४॥

नैन्द्रस्य प्रगाथस्योत्कर्षसंभवो । सन्निहितावत्प्राकरणिक एवेन्द्र यागे, तस्यावान्तराधिकारविहित मन्त्रांतरावरोधेन तत्रास्य मन्त्रस्यानव काशात् । नापि क्रतुप्रकरणबहिर्भूते इंद्रयागांतरे, तत्र सामान्य सम्बन्धबोधक प्रमाणाभावेनोत्कर्षा नुपपत्तेः । इन्द्रशब्देन मनोवाय्वादिशब्दस्य न्महेंद्र प्रतिपादनतु लक्षणाभियात्वयैव निरस्तम् । अवशिष्यते तावद्यागवेळायां विशेषणयुक्त प्रकाशनेपि मंत्रे विशेष्यमात्र प्रकाशन ना नुपपन्नमिति, तत्रेदंवाच्यं, स्तौतिशंसत्योर्गुणि प्रकारक गुण विशेष्यकबोधानुकूल व्यापारवाचित्वस्य गुणिनिष्ठ गुणतात्पर्यक बोधा नुकूल व्यापारवाचित्वस्य वा चक्रकेशांशो देवदत्त इत्यादाविवावधारणात्, गुणिप्रकाशनार्थत्वे लक्षणापत्ते स्स्तौतिशंसति वाक्यस्यैवार्थस्य विधेयत्वावगमा त्तस्य च दृष्टार्थत्वासंभवे अदृष्टार्थत्वकल्पनस्य फलमुखत्वेन प्रामाणिकत्वान्ना नुपपत्तिरिति । लोके चक्रकेशो देवदत्त इत्यत्र देवदत्ते चक्रकेशप्रतिपादनपव स्तुति बुद्धिरुत्पद्यते, न पुनर्वक्रकेश

त्वस्य देवदत्तविशेष्यता प्रतिपादने । तेन स्तौतिशब्दार्थे पदशक्ति पर्यालोचनया प्रकाशनार्थत्वावगमाद् दृष्टार्थत्वांगीकारेणापि गुण प्रकारक गुणिविशेष्यक शाब्द बोधानुकूल व्यापाररूपस्तुति विधापि स्वमथ युक्तम् । नच प्रयाजशेषेणेतिवत् दृष्टार्थत्वानुरोधेन लक्षणां गीकरणमप्यदोष , प्रकाशनस्य लिङ्गकल्प्यश्रुतिबलेनैव प्राप्तिसम्भवे लक्षणयैव सामप्रतिपादनेऽपि विधिवैयर्थ्यात् । किञ्च दृष्टार्थत्वं किं स्वपा मन्त्राणामभ्युपगम्यते, स्तुतेर्वा ? नाद्य , मन्त्राणामपि स्तुतिनिष्पादकत्वेन तत्स त्वात् । नान्त्य , स्तुतिस्वरूपस्यैवहानापत्ते । तस्माद्धातु श्रुतिसंयोगात्प्रक रण एव स्तौतिशंसती स्तुतिरूप क्रियोत्पत्ति विदध्यातामिति सूत्रार्थः ।

॥१३॥ सू — शब्दपृथक्त्वाच्च ॥ २ - १ - १५ ॥

' द्वादशस्तोत्रोऽग्निष्टोमो द्वादश शस्त्रोऽग्निष्टोम " इति श्रुत द्वाद शत्व न प्रकाशनलक्षणार्थत्वेऽवकल्पते प्रकाशमाना मन्त्राश्च प्रतिपद यैभिप्रायेण द्वादशत्वानुपपत्ते । प्रकाशनत्वेनैक्यापत्तौ हि सुतरात दनुपपत्तेश्च । अस्मन्मते तु लत्र्यपि प्रत्येकं स्तुतिरूपक्रिया भेदे विधि भेदेन विधेयतत्तदनेकस्तुतिव्यक्ति वृत्तिविधेयतावच्छेदकीभूते वैजात्या घाय्यभावा तज्जातिगत द्वादशत्वोपपत्ति । तथातु प्रकाशनस्य सामर्थ्य प्राप्तत्वेन विधेयत्वा प्रवैजात्यकल्पन प्रमाणमस्ति ।

किंचास्मन्मते वैजात्याकल्पनेऽपि तत्तद्विधिभेदेन विधेयभावना भाव्यस्या नेकस्तुतिजन्या पूर्वस्य भेदावश्यभावा तद्गतद्वादशत्वेनापि स्तोत्रादि द्वादशत्वोपपत्ति । प्रकाशन पक्षेतु तस्य दृष्टार्थत्वेना पूर्वा नंगीकारात् दृष्टप्रयोजनस्यस्य च भरयत्र बाधितत्वेन द्वादशत्वानुपपत्ति । अतोद्वादशशब्देन स्तोत्राणां शस्त्राणां च पृथक्त्वाक्षेपादपि न प्रका शनलक्षणा ।

॥१४॥ सू — अनर्थकश्च तद्वचनम् ॥१ १ १६॥

प्रकाशनार्थत्वपक्षे अग्निष्टुति " आग्नेया ग्रहाभवन्ती "ति वचनेन प्राकृतग्रहानुवादेनाग्निदेवताविधौ कृते प्राकृतदेवताबाधेव स्वप्रकाशक मन्त्रबाधेनाग्निप्रकाशकमन्त्रांतराणां न्यायादेव प्राप्ते राग्नेयीषुस्तुव तइति वचनवैयर्थ्यापत्ति । नचास्य प्राकृतमंत्रेष्वग्निपदोहप्रसक्तौ मन्त्रान्तरविधानेनार्थवत्त्वमिति वाच्यम् , " पूर्यतिवाय एतद्वाक्षरं यदे प्रमूहयति तस्माद्वचनादोह्" ति ऋगूहनिषेधा दर्थप्रकाशनरूपकार्ये बले ऽग्नेयमन्त्रान्तरस्यैव प्राप्तिः । अस्मन्मतेतु सत्यपि ग्रहाणामाग्ने यत्वे कर्मासमवेतगुणिनिष्ठस्यापि गुणस्यकीर्तनेन स्तोत्र शस्त्रजन्यादृष्ट संपत्त्युपपत्ते प्राकृतानामिव मंत्राणा मुच्चारणे प्रसक्ते तन्निवृत्त्यर्थमाग्ने यीषु स्तुवत इति सार्थकम् ।

॥१५॥ सू — अयथार्थ प्रतीयते ॥ २ १ २७ ॥

सम्बद्धे स्तोत्र शस्त्रेति श्रुत्या स्तोत्रशस्त्रयो स्सम्बन्ध प्रतीते स्सम्बधस्यच भेदसाधनात्वा स्तोत्र शस्त्रयोस्स्वरूपत. फलतोभेदे वैजात्य कल्पनया भेदोवधार्यते । नचासौ प्रकाशनार्थत्वपक्षेसंभवति । नच स्तोत्रा द्वावपि प्रगाणा प्रगाणकृत सम्भवत्येवेतिवाच्य, स्वरूपत फलतोवा भेदा सम्भवे प्रगाणाद्यंग कृतभेदस्या न्याय्यत्वात् ।

॥१६॥ सू — अभिधानवत्कर्मवत् ॥ २ - १ २८॥

यदिद स्तोत्रशस्त्रादिरूप सामान्याभिधान यद्याज्यप्रयोगादिरूप विशेषाभिधान तदुभय मप्यारादुपकारकत्वपक्षे उपपद्यत, नतु संस्का रकर्मत्वपक्षे, संस्कारस्य संस्कार्यनिरूपणाधीन निरूपणीयस्य संस्का र्येणैवावच्छेदसिद्धौ अवच्छेदकीभूतसज्ञानपेक्षत्वात् । एव सत्यपि यद्यारादुपकारकत्वग्राहक स्तौति शंसति धातुरूप ग्र्यातसयोग स्संस्कारकर्मबाधकोनस्या, तर्हीलिंगेन संस्कारकर्मत्वस्यैवावधारणात "अशुगृहाणपदाभ्य गृह्णाति" ति वदन्यासायप्यवच्छेदकांतरे सहायच्छि न्नमेव ज्ञात कृत धर्माभ्युदयकारिभवतीति कल्पनया सहाप्यगांज्ञि येत नास्वेतदस्तीत्यत आरादुपकारकत्वमेव युक्तमुत्पश्याम ।

॥१७॥ सू — फलनिर्वृत्तिश्च ॥१  १  २९॥

' स्तुतस्य स्तुतमस्यूर्जस्वत्पयस्वत् आगास्तोत्रस्य स्तोत्र गम्या दिन्द्रियावद्वावानामहेषुक्षामहि प्रजामिष सामे सत्याशीर्देवस्य भूयादि " तिमन्त्रे भावनिष्ठातेन स्तुतपदेन स्तोत्रक्रियोपादानात्, स्तोत्रस्य माये स्तोत्रमसि तदेव भूत स्तोत्रस्योर्जस्वत्पयस्वद्रूपा मामगम्यात्, इंद्र यत इन्द्रोपलक्षित देवताद्वतो वय त्वां याचामहे प्रजामिष भजामहे इतिचैव यदुपलक्षितस्य स्तोत्रस्य आशीस्तया भूयादित्यर्थकेन स्तोत्रा देव फलं प्रार्थित न देवताया । यद्यपि च नेद स्तोत्रस्यफल करणविभक्ति संयोगाभावेन यागतत्त्वगमायस्य स्तोत्रस्य प्रार्थनीय फलकल्पनानुपपत्तेः तथापि प्रधानफलमेवेद परम्परासम्बन्धेन स्तोत्रा प्रार्थितलक्षणया स्तोत्रफलमेव कलुपचाराद्वचनम् । अतश्च स्तोत्रक्रि यात फलप्रार्थनात्ताभ्या एव प्राधान्यम्, न देवताया । इतरथाहि देवतातत्त्वफल प्रार्थेत प्रधानत्वात्, नांगभूतात्प्रकाशनात् । किं च प्रधानानस्य दृष्टफलत्वेन तात्फलस्य प्रायशागम्यत्वाच्च प्रार्थनाद्यम्, स्तोत्रफलस्याव दृष्टार्थादृष्टार्थमिति विशेष । अत आरादुपकारकाण्येव स्तोत्रशस्त्राणीतिसिद्धम् ।

प्रयोजन प्राकृत प्रहानुवादेन विकृतौ देवतान्तरविधाने आग्नेयीषु स्तुवत्स्वाग्नेयीष्वचनाभावे प्राकृतानां मन्त्राणामविकारेण प्रयोग सिद्धान्ते, पूर्वपक्ष प्राकृतप्रगाथेन वैकृतदेवाय ऋगन्तरागम इति दशमे वक्ष्यते ।

इति स्तोत्रादिप्राधान्याधिकरणम् ॥५॥

---

अथ मन्त्राविधायकत्वाधिकरणम् ।

---

॥१॥ सू — विधिर्वा संयोगान्तरात् ॥२—१—३४॥

"भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयतैषह्यर्थोविधीयते " इत्यनेनोपक्षिप्तानां विधायकाख्यातानां "तान्द्वैध" मित्यादिना द्वैविध्यमुक्त्वा इदानीं प्रसंगादाख्यातस्यापि क्वचिद्विधायकत्व नास्तीति प्रतिपाद्यत ।

' नतानशातिनदभाति तस्करोनासामामित्रो व्यथिरादधर्षति । ज्योगिताभिस्सचते गोपति स्सह देवाश्च याभिर्यजतेददाति च " इत्यादिमंत्रे ' यस्योभयं हविरार्तिमार्छे " दित्यादौ ब्राह्मणेच येयच्छब्दादि समभिव्याहृता आख्यातशब्दा स्ते किं विधायका उतनेतिसंशय । अत्रास्य पूर्वभेदोपयोगित्वम् विचार्यमाणत्वा त्पादाध्यायसंगतीस्पष्टे । प्रासंगिकीत्वनन्तरा _।

तत्रार्छेदित्यादौ अलिन्द्ग्धलिङ्श्रवणा द्यजतेददाति चेत्यादाविव श्रुत्युन्नीत लङ्तत्वावधारणा द्यजेतस्वर्गकामइतिवदव विधायकत्वमिति' । नच यच्छब्दादिना प्रतिबध यच्छब्देन गोपदार्थस्य सिद्धत्वद्योतनेपि " यदाग्नेयोष्टाकपाल " इतिव यागसाधनत्वेन त्वप्युपपत्ते । अतएव कर्तृसमानाधिकरणस्य यच्छब्दस्यैव प्रतिबधकता न कर्मसमानाधिकरणस्येति सिद्धान्तिनोपि प्रवादः ।

वस्तुतस्तु गुणभूतेन यच्छब्दादिना प्रधानभूतविधिशक्ति प्रतिबधस्यान्याय्यत्वा त्कर्तृसमानाधिकरणे यच्छब्देसत्यपि न विधित्वव्याघात । किं च यच्छब्दादिन प्राप्तिद्योतक त्मतिबधक वाच्यम् । सापिप्राप्ति. प्रमाणान्तरेणास्ति तदातेनैव प्रतिबधसिद्धेः कृतयच्छब्दादिना । यदिनास्ति तदा यच्छब्दसद्भावेपि यएव पि द्वानग्निचिनुत " इतिव दमासार्थकत्वादेव विध्युपपत्ते नैयच्छब्दादे. प्रतिबधकताभवति ।

वस्तुतस्तु एतस्य मत्रस्य गोद्रव्यकानूबन्ध्य पशुपुरोडाशानुनिर्वाप्य दैविकहविर्यागे चरुद्रव्यके गोदैवत्ये याज्यात्वेन विनियुक्तत्वात्तत्र

यदुद्रव्यकतया द्वोद्रव्यकत्वाभावेन तत्राविनियुक्तस्याप्यस्या प्राप्तत्वतग्रो द्रव्यक यागविधायकत्वोपपत्ति । नच साक्षाच्छेषिणिर्देशिवक्त्राद्वियोगिगो द्रव्यकत्वाप्रामावपि तच्छेषिण्या मनूपन्यासा गोद्रव्यकत्वस्य प्राप्तत्वाद् विधायकत्वोपपत्ति रितिवाच्यम् , एव यथाकथंचि त्प्राप्तिसंभवे प्यभ्या सात्कर्मा तरत्वोपपत्ते । अतश्च यजेतस्वर्गकाम इत्याख्यातस्य स्वगत स्याख्यातस्य विधिरूपैवप्रयोजनकत्वमेव, विधायक शब्दत्वस्याभ यत्र समानत्वादिति सूत्रार्थ ।

अत्र च मन्त्रग्रहण यच्छब्दादि समभिव्याहतारूपात मात्रोप लक्षणम्, नतु स्वतन्त्रम्, "वसन्तायकपिञ्जला ना लभेते" इत्याद्यभि युक्तप्रसिद्ध्या मन्त्रत्वेपि विधायकत्वांगीकारात् । यस्योभयमित्यादौ च ब्राह्मणे यच्छब्दादिसमभिव्याहारे तदनंगीकाराच्च । अतश्च सर्वस्यास्य प्रोदाहरणाद्येपि प्रायशो यच्छब्दादि समभिव्याहारस्य सत्त्वेनसत्त्वात्सूत्र मन्त्रग्रहणम् ।

सिद्धान्तमाह-

॥३॥सू — अविरा प्रयोग सामर्थ्या म त्रोभिधानवाचीस्यात् ॥२ । १४॥

नैतेविधायका यजते 'इत्यादीनामुद्देशे साधारण्येन विधपर्यक त्वा निश्चयात् । नच स्तुत्यादिविषय विधेरभावे स्तुतेरेवा निश्चयेन तस्या अतन्निश्चायकत्वात् । नच "वसन्तायकपिञ्जलानालभेते" इत्यादिनद्प्रामाण्यंत्वमेव तन्निश्चायक, गोद्रव्यकस्य यागदानादेरनुपपत्त्यादि रूपस्य तदन्यस्यषा बहुश प्राप्तत्वेन तदसिद्धे । अतएव न विधि पुनश्च घणरूपाद्भ्यासा कर्मांतरत्व शक्य विधित्वस्यैवा निश्चयेनाभ्यासस्वरूपा भावात् । विध्यभावेपि पुनःश्रुतिमात्राद्भेदस्तु पुनःश्रुतेस्स्मरणाद्यर्थेनाप्युप पत्ते स्तन्यपरत्वाभावादयुक्त । किंच यद्यप्यत्रविधायका लिङादिरश्रोप्यत तथापि यच्छब्दादिना विधिशक्तिप्रतिबन्धा द्वास्य विधायकत्वोपपत्ति । तथाहि - यच्छब्द स्तावत्स्वसमभिव्याहृतार्थस्य सिद्धतांद्योतयन् प्राप्ति

मपेक्षते । अस्तिचात्रसा । अतोगोद्रव्यकयागदानादेरनूद्यमानस्या ज्ञात ज्ञापनैक स्वभावविधिविषयत्वायोग स्स्पष्टएव । नच यच्छब्दस्य स्वार्थमात्रे सिद्धताद्योतकत्वा द्रोस्वरूपानुवादेपि तस्य साधनाविनाभिप्रु पपत्ति रितिवाच्यम्, यः पार्कंकरोति छभुह्क्त्कइत्यादौ यतच्छब्दयो स्स्वसमभिव्याहृतमात्रे सिद्धत्वद्योतकत्वाव्युत्पत्तेः । अतश्च याभियंजतेपाश्च गाद्ददाति तामनर्ग्यंति, नच तस्करोदभ्नोति, नचएनाः अभिद्योग्य धिरादधर्षति व्यथया अभिभवति, गोस्वामीच ताभिस्सह्चिरप्रदर्वाति यच्छब्देन समभिव्याहृते गोद्रव्यंके यागदानादावपि सिद्धतामतीतं न विधेयतोपपत्तिः । यच्छब्दस्य समभिव्याहृतकृत्ति सिद्धताद्योतकत्वा देवन्व यत्रकर्तृसमभिव्याहारस्तत्र कृत्याश्रयत्वरूपकर्तृत्वस्य सिद्धता प्रतीतौ कृतेरपि तत्प्रतीते विधेयत्वानुपपत्त्या विधिशक्त्यनुपपत्तिः । यत्रतु कर्ममात्रसमभिव्याहृतो यच्छब्द स्तच्छब्दसमभिव्याहृतश्च विधि,स्तत्रसत्यपि कर्मस्वरूपस्यानुवादे कर्तव्यत्वेन विधानोपपत्तेः न विधिशक्ति: प्रतिबधकता यच्छब्दस्य । प्रकृतेतु विधेयंच्छब्देनैव स मभिव्याहाराद्युक्ता प्रतिबधकतेति विशेषः । एव सत्यपि यदिकथं चिद्प्याह्लोचयमाने प्राप्तिर्नसभाव्येत ततो यदाग्नेयोष्टाकपाल इति वच च्छब्दस्य स्वार्थमात्रसिद्धत्वद्योतकता मगीकृत्य विधे र्विधायकत्वोपपत्ते र्नशक्तिः प्रतिबध्येत । नात्वेतदस्ति, गोद्रव्यकस्य यागदानादेर्बहुशः प्राप्तत्वात् ।

यत्तु- सत्यपि यच्छब्दस्य विधिविरोधित्वे प्रधानभूतत्वा द्विध्य नुग्रह एवन्याय्यः, न गुणभूतयच्छब्दानुग्रह, इत्युक्तम् । तदुच्चैऋचा क्रियत इत्यादौ प्रधानभूतस्या प्युपसंहारस्यस्य विधे रुपक्रमस्येन गुणभू तेनाप्यर्थवादेन बाधस्य वक्ष्यमाणत्वा दाकिंचित्करम् ।

वस्तुतस्तु- विधिवदेव यच्छब्दस्यापि प्रधानभूत भावनान्वयित्वा द्यविधि प्रतितस्य गुणत्वम् । यदि परं पदांतरत्वा तदपेक्षया विप्र कर्षंशंस्येत, ततः "ऐन्द्रपञ्चशराव" मित्यनेन वाक्यभेदापत्त हेतुहेतुम तोरियनुशासन मैदपर्यापत्तेश्च विधिशक्तिप्रतिबधोनुसधेयः ।

न्यूह प्रवरनामधेयानि किं मन्त्रा उतनेति विचारः । केचित्तु मन्त्रब्राह्मणात्मकवेदस्य द्वैराश्ये निरूपिते प्रसंगात्प्रत्यक्षपठितएव वेदे द्वैराश्यं नत्वनुमित इति वक्तुमूहादीनां द्वैराश्यबहिर्भावेन प्रतिपादत इत्याहुः । तेषामनाम्नातेष्वमन्त्रत्वमितिवद् ब्राह्मणत्वमित्यपि सत्त्वापत्तेः उपेक्षैवयुक्ता ।

तत्रप्रयोगकाले अर्थाभिधायकस्यैव मन्त्रपदवाच्यत्वादूहादीनां चार्थाभिधायकत्वस्य स्पष्टत्वात् मंत्रपदएकवाक्यत्वाच्चैषां मन्त्रत्वम् । अन्यथाह्य मन्त्रैकवाक्यतापन्नानां मन्त्राक्षराणामपि श्लोकैकवाक्यतापन्न मन्त्राक्षरवत् मन्त्रत्वापत्तिः । ऊहेतु मन्त्रान्तर्गताग्निपदत्यागादप्यवशिष्टाक्षरेषु सा । अस्मन्मतेतु मन्त्रभूताग्नि पदयुक्तानामिव मंत्रभूतसूर्यादि पदयुक्तानामपि मंत्रत्वोपपत्तेर्नायंदोष । तस्मादूहादीनामपि मन्त्रत्वमिति प्राप्तेऽभिधीयते -

प्रयुक्तस्त्वध्यायादित्वा व्याप्त्यादिदूषणवशेनैतल्लक्षणायोगस्य स्पष्टत्वा दभियुक्तप्रसिद्धिविषयत्वस्यैव तल्लक्षणत्वसंभवाच्च । अतश्चोहादीनां तदभावेन मन्त्रत्वायोगस्स्पष्टएव । नचैतावता तदेकवाक्यतापन्नमन्त्राक्षराणाममन्त्रत्वापत्तिः, मन्त्रत्वप्रत्यभिज्ञानस्य दृढत्वात् । अतएव कर्मकालेप्यान्त्य प्लुतिकरणेपि न मन्त्रत्वहानिः । यत्तु श्लोकाद्येकवाक्यतापन्न द्विपमन्त्राक्षरेषु न मन्त्रत्वप्रसिद्धिरभियुक्तानां तत्र मन्त्रत्वे प्रमाणाभाव स्स्पष्टएव । अतश्चोहादि ष्वभियुक्तप्रसिद्ध्यभावेन अमन्त्रत्वेपि तदेकवाक्यतापन्नानामक्षरान्तराणां तादवस्थ्यात् मन्त्रत्वोपपत्तिः । एवञ्चैरं कृणोमिपमित्यादौ इरापदस्य मन्त्रत्वप्रसिद्ध्यभावेन मन्त्रत्वेपि तदेकवाक्यतापन्नाक्षरान्तराणां मन्त्रत्वोपपत्तिः । इरापदेमन्त्रत्वप्रसिद्धिस्तु अध्ययनकाले पारायणादौ चोपयुज्यत इति द्रष्टव्यम् ।

यत्तु वार्तिके इरापदस्य ऐरंमितिविधिवाक्ये तद्धितान्तर्गतत्वेनाम्नातत्वादत्रापि मन्त्रत्वमित्युक्त, तद्ब्राह्मणे समाम्नातस्यापि मन्त्रप्रसिद्ध्य विषयत्वेन मन्त्रत्वायोगात् वसन्तायकपिञ्जलाना छभेतेत्यादिवन्मन्त्रब्राह्मणपाठाभ्युपगमेऽपिवा ऐरपदस्यैव पठितत्वेन मन्त्रत्वापत्ते स्तद्विधेयस्ये रापदस्यवस्तुतः पाठाभावेन मन्त्रत्वानुपपत्ते रतिशयार्थमिति द्रष्टव्यं ।

युक्तार्थवशेन पादव्यवस्था । क्वचित्तु "अग्निःपूर्वेभिर्ऋषिभि" रित्यादौ लघुगुर्वक्षरसाम्यात्मकवृत्तवशेन, "अग्निमीळे" इत्यादौ चाक्षरसङ्ख्यानियमलक्षणच्छन्दोवशेन, "समुद्रा मिन्द्रंनरेजमान" मित्यादौ चाल्पवैलक्षण्येनैव, पादव्यवस्था। अतएव सूत्रे अर्थवशाग्रहणं वृत्तवशादेरुपलक्षणार्थं । तदपि च न लक्षणान्तर्गतं, पादव्यवस्थावन्मन्त्रत्व रूपस्यैव लक्षणस्या नतिप्रसक्तत्वात् ।

## इति ऋग्लक्षणाधिकरणम् ॥ १० ॥

---

## अथ सामलक्षणाधिकरणम् ।

---

॥१॥ सू - गीतिषु सामाख्या ॥ २-१-३९ ॥

अथ वेदेष्वेवमित्यनुवृत्तस्य मन्त्रगतगीतित्वस्य सामशब्दार्थतालभ्यते। अतश्च न लौकिकगीतावतिप्रसङ्गः । अभियुक्तव्यवहाराच्चास्यापि शब्दार्थत्वावधारणं । न चैव वैदिकगीतिविशिष्टमन्त्रेऽभियुक्तप्रयोगात् मन्त्रस्यापि वाच्यत्वापत्तिः, मन्त्राणां व्यक्तिन्यायेन लक्षणयापि भानोपपत्तौ अतिरिक्तशक्तिकल्पने प्रमाणाभावात् । विस्तरेणचैतत्सप्तमे उपपादयिष्यामः । न चैवं पौनरुक्त्यम् , सामशब्दस्य गीतिमात्रवाचित्वे तद्विशिष्टमन्त्रवाचित्वे वा उभयथा ऋग्यजुर्भ्यां विवेकोपपत्तेः गीतिमात्रवाचित्वस्य इहानुपयोगेन अवाच्यत्वात् सप्तमएव ऋगन्तरे अतिदेशसिद्ध्यर्थं अवश्यवाच्यत्वात् । इह सप्तमसिद्धस्यैव गीतिमात्रवाचित्वस्य अनागतावेक्षणेन शिष्यहितार्थं कथनेन पौनरुक्त्यानापत्तेः । यथा च तस्य नाक्षत्राधिकरणेन पौनरुक्त्यं तथा सप्तमएव उपपादयिष्याम. ।.

यत्तु नवमे पुनर्गीतिमात्रवाचित्वकथनं तदुत्तरविवक्षार्थं स्मरणार्थमिति तत्रैव वक्ष्यते ।

## इति सामलक्षणाधिकरणम् ॥११॥

---

## अथ यजुर्लक्षणाधिकरणम् ।

---

॥१॥ सू - शेषेयजुश्शब्दः ॥ २-१-३० ॥

ऋक्सामभिन्नं यावन्निश्चिताक्षरमन्त्रजातं तद्यजुः । स्तोभाक्षराणामपि यजुष्ट्वातिव्याप्तिः ।

## इति यजुर्लक्षणाधिकरणम् ॥ १२ ॥

---

## अथ निगदानांयजुष्ट्वाधिकरणम् ।

---

॥१॥ सू - निगदोवा चतुर्थस्याद्धर्मविशेषात् ॥ २-१-३१ ॥

शेषे यजुश्शब्द इत्येतदाक्षेपेणेदमारभ्यते । सन्ति निगदा नाम प्रायशः परसम्बोधनार्था मन्त्राः अग्नीदग्नीन्विहरेत्यादयः । ते किं यजूंष्येव, उत भिन्ना इति विचारः । तत्र निगदानां यजुष्ट्वे "उपांशु यजुषे"ति वचनेनोपांशुत्वप्राप्तिः " उच्चै र्निगदेने " ति वाक्यविहितोच्चैस्त्वानुपपत्तिः । न च विशेषविहितेन सामान्यविहितस्य बाधः, विशेषविधेः स्वविषयप्रवृत्तिभेद बोधनेनाप्युपपत्तौ सामान्यवाक्यस्य संकोचप्रमाणाभावात् । न च परस्परापादकत्वरूपकार्यानुरोधेनोपांशुत्वविधेः संकोचादुच्चैर्निगदेनापि स्यात्

याद्वक्यत्वोपपत्तेर्न भेदबोधकतेति वाच्यम्, मन्त्रगतलिङ्गप्रमाणकस्मरप्रत्या यनरूपकार्यानुरोधेन वाक्यस्यापि ब्राह्मणगतस्य सङ्कोचायोगात् । "नमः प्रवक्त्रे देवेज्यानग्निरत्य" इत्यादीनां परसम्बोधनार्थत्वस्याप्यभावाच्च । सत्यपि परसम्बोधनार्थत्वे उपांशुत्वव्यतिरिक्तमन्द्रादिस्वराणामपि पक्षे प्राप्तत्वादुच्चैस्त्वानुवादानुपपत्तेश्च । अतश्चोच्चैर्निगदेनेत्यस्य विधित्वावश्यभावाद्भेदबोधनादपि तदुपपत्तेर्न सामान्यस्यापि वाक्यस्य सङ्कोचकल्पनाकर । तस्मादर्थान्तरं 'निगदाः' । सूत्रस्पष्टम् ।

॥ १ ॥ सू – व्यपदेशाच्च ॥ २-१-३१॥

इमनिगदाः इमानियजूंषीति सञ्ज्ञाभेदादपि ज्योतिरादिवद्भेदकत्वोपपत्तेरर्थान्तरं । एवञ्च 'मन्द्रपरस्थस्य निगदभूतो भवति तस्मात् यजु" रिति सुब्रह्मण्याजास्यशाषे निगदस्य यजुष्ट्वसंकीर्तनयोगेन यागसाधनत्वमात्रपरम्, सुब्रह्मण्यमानस्यैव वा यजुष्ट्वापकमिति द्रष्टव्यम् ।

॥३॥ सू – यजूंषि वा तद्रूपत्वात् ॥ १-१-३३ ॥

नैतदेव. "अहे बुध्निये" ति मन्त्रे मन्त्राधान्तरभेदाना गृहादिमन्त्राणां यथाणामेवानुकीर्तनेन निगदस्य भेदेना नानुकीर्तनात्, मन्त्र एव स्वय निगदभूतो भवतीत्यत्र ऋक्सामभिन्नमन्त्रस्य सुब्रह्मण्यानिगदे यजुष्ट्वसाधकत्वेनोक्तस्य निगदान्तरेष्वपि सत्त्वाच्च । नचायौगिको यजुश्शब्दः, जपादिसाधनमन्त्रेऽपि प्रश्लिष्टपठिते यजुश्शब्दप्रयोगेण तस्य रूढ्यापगमात् यौगिकार्थबोधकत्वानुपपत्तेः । तस्माद्यजूरूपत्वाभिधाना यजुष्ट्वमेव । यत्तु विरुद्धधर्मकत्वात् भेद इति तत्रोत्तरम् –

॥४॥ सू – वचनाद्धर्मविशेषः ॥ २ १ ३४॥

'वेदो वा प्रायदर्शनादि" त्यत्र तृतीये वेदोपक्रमानुरोधेनोच्चैस्त्वादेर्ऋग्वेदादि विहितकर्माङ्गमन्त्रमात्राङ्गत्वस्य स्थापयिष्यमाणत्वेन भवन्मतेऽप्युच्चैर्निगदेनेत्यस्यो पांशु यजुषेति वाक्यसङ्कोचस्यावश्यं भावा

द्भेदानुमापकत्वानुपपत्तेः, स्तस्यपिचोच्चैस्त्वादे ऋगादिधर्मत्वे परप्रत्यायन रूपदृष्टार्थानुरोधेनोपांशुत्वानुपपत्तेः उपांशुयजुषेत्यस्य निगदविषयत्वानुपपत्तेः सत्यपि निगदाना यजुष्ट्वे उच्चैर्निगदेनेत्यस्य निगदेषु पक्षप्राप्तमन्द्रादिव्यावर्तन फलकोच्चैस्त्वनियामकत्वोपपत्ते र्भेदानुमापकत्वायोगाच्च । नच लैंगिक परप्रत्यायनार्थत्वस्य ब्राह्मणवाक्यगतेन वाक्यप्रमाणकेना पिवाधःशक्य , लैंगिकस्यापि प्रधानभूतस्य परप्रत्यायनस्यांगभूतेनो पांशुत्वेनबाधायोगात् । उक्त ह्यतत्प्रमाणबलाबलापेक्षया प्रमेयबला बल ज्यायइति । अतश्च लिंगनैवोपांशु यजवाक्यस्य संकोचितत्वान्नोच्चै निगदेनेत्यस्य सफलत्वकता । किंच नास्य लिंगस्यैव विधिसंकोचे व्यापार अपितु विधिवाक्यस्यापि स्वनिष्ठगौरवपरिहारार्थं स्व । तथाहि- उपांशुयजुषावस्य निगदेष्वप्यन्ताप्राप्तोपांशुता विधायित्वेना पूर्वविधित्वापत्ते स्तस्य चा दृष्टोद्देश्यकत्वेन गौरवापत्ति । पुनश्च निगदभिन्नमन्त्रान्तरे पक्षप्राप्तोपांशुतानियामकत्वेन नियमविधित्वाद्वैरूप्यम् । अतो निगदातिरिक्तेष्वेव दृष्टपदार्थोद्देश्यकतालाघवार्थं स्वरविशेषनियामकत्वांगीकरणात्स्वयमपि विधिस्स्वसंकोचेच्छयाम्रियते । अतश्चापांशुत्वाविषयीभूतेषु निगदे पूच्चैर्निगदेनेत्यनेन स्वरानियमेनानुपपन्न ।

यत्तु -मूले उच्चैर्निगदेनेत्यस्य परप्रत्यायनरूपकार्यबलप्राप्तोच्चैस्त्वानुवादकत्व मुपांशुत्वविधिप्रशंसाफलकभंगीकृतम् , तदतिशयार्थं, मन्द्रादिस्वरान्तराणामपि पक्षे प्राप्तत्वेन नियमवदनुवादायोगात् । परप्रत्यायन रूपकार्यरहितानामपि निगदाना सत्त्वेन तेषूपांशुत्वस्यापि पक्षप्राप्त्या सुतरां तदयोगाच्च । नचैव मुपांशुयजुषेत्यत्र वस्तुतो वेदोप क्रमाधिकरणन्यायेन वेदलक्षणावन्निगदपदेपि यजुर्वेदलक्षणापत्ते र्यजुर्वेद विहितकर्मांगभूतमन्त्रेषू च्चैस्त्वोपांशुत्वविकल्पापत्तिः, वेदोपक्रमस्यैकत्रै व लक्षणातात्पर्य ग्राहकत्वेनोपपत्त्या उभयत्र तदंगीकारे प्रमाणाभावात्। नच नियामकाभावः, 'वायो र्यजुर्वेद" इति यजुःपदसमभिव्याहृत वेदपदोपक्रमस्य यजु पदलक्षणायामेव तात्पर्यग्राहकत्वेन तदासिद्धेः ।

यावति पदसमूहे लोके वाक्यत्वप्रसिद्धिस्तावत एव यजुष्ट्वं न तु वाक्यसमूहे, तस्यैकार्थप्रतिपादकत्वाभावेन विनियोगानर्हत्वात्। लोके च यत्रैकार्थत्वाद् विभज्यमाने साकांक्षत्वं च तावत एव वाक्यत्वप्रसिद्धेस्तावत एव यजुष्ट्वमित्यवगम्यते ।

ननु किमिदमर्थैकत्वम्? न तावत्पदार्थैकत्वम्, तेषां गामानयेत्यादिवाक्ये नैकत्वात् । नापि वाक्यार्थैकत्वं ? तस्यापि संसर्गरूपत्वेन प्रतिपदार्थं भेदात् । नापि प्रयोजनैकत्वम्, तथाविधस्यापि रूपप्रयोजनैकत्वं विवक्षितं ततस्सौर्यं चरुमित्यादौ द्रव्यदेवतैक प्रतिपादनं यागस्य प्रतिफलमित्यनेकार्थत्वाद् अर्थैकत्वानापत्तिः, "सर्वेभ्यो दर्शपूर्णमासा" वित्यादौ च सामान्यपुरुष विशेष्यप्रयोजनैकत्वं? तदा "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यादावाग्नेयादिभावनानां पुरुषविशेषणानां भिन्नत्वात् तदेकत्वानापत्तिः । अथ पुरुषविशेष्यप्रतिपादकशब्दैकत्वम्, तर्हि व्रीहियव वाक्ययोः भगोवां विभजत्वित्यादौ च तत्प्रतिपादकशब्दभेदे मर्थैकत्वानापत्तेः. विभज्यमानसाकांक्षत्व रूपविशेषणोपादान वैयर्थ्यमिति चेन्न,-भिन्नप्रतीतिविषयानेकपुरुषविशेष्यराहित्यमर्थैकत्वम्. अस्ति च गामानयेत्यादौ तत्, आनयनभावनाया मुख्यविशेष्यभूताया एकत्वात् । अस्ति चेदं दर्शपूर्णमासवाक्येऽपि, अनेकासामाग्नेयादिभावनानामेकेन प्रयत्नेनोपादानात् भिन्नप्रतीति विषयत्वासिद्धेः. व्रीहियवादिवाक्ययोः भगोवां विभजत्वित्यादौ च सत्यपि भिन्नप्रतीतिविषयत्वे मुख्यविशेष्यस्य यागविभागभावनादेरेकत्वाद् दर्थैकत्वोपपत्तिः । नन्वत्र 'आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां" मित्यत्र कल्पतिभेदे 'क्लृप्तीर्वाचयती "ति बहुवचनं द्विभागभेदे प्रमाणमस्ति, यतोऽर्थभेदश्शक्यत । अतस्सत्यपि व्रीहियववाक्ययोः " भगो वांविभजतु अर्यमावां विभजतु पूषावां विभजत्वि " त्यादौ चोक्तविधार्थैकत्वे विभज्यमानसाकांक्षत्वाभावाद्वाक्यभेदसिद्धिः । विभज्यमानसाकांक्षत्वं चान्वीयमानयोः पदार्थयोरनन्वये अनिवृत्ताकांक्षत्वम् । यथा गामानयेत्यत्र गोशब्दस्य । न च भगोवामित्यत्रार्यमावामित्यस्यानन्वये साका

क्षावमस्ति, स्ववाक्योपात्त विभजनयन्वयेनैव निराकांक्षत्वात । अतोऽस्येवाविभज्यमानसाकाङ्क्षत्व विशेषणसार्थकम् । अर्थैकत्वविशेषणसार्थक्यन्तु 'स्योनन्ते सदनं करोमी'त्यस्यापि तस्मिन् सीदेत्यनेनानन्वये तच्छब्दस्य साकाङ्क्षत्वेन विभज्यमानसाकाङ्क्षत्वा देकवाक्यत्वापत्त द्रष्टव्यम्, तत्र विभज्यमानसाकाङ्क्षत्वे प्यर्थैकत्वाभावात् । नहिसदनकरण प्रतिष्ठापन भावनयो रेकपदोपादानमस्ति, येनैकमर्तीतिविषयत्व माशङ्क्येत । सदनकरणभावनायाः प्रतिष्ठापनभावनाया प्रकारत्वाङ्गीकारेण मुख्यविशेष्य भेदाद्विरेय वाक्यात् आख्याता तस्यापि मुख्यविशेष्यता प्रतीतेः तच्छब्दस्य च वाक्यान्तरोपात्त सदनकरणप्रकाशकत्वेनाप्युपपत्ते र्वाक्येनैकवाक्यायोगादयुक्ता । अतोऽर्थैकत्वाभावादेव तत्रैकवाक्यत्वाभाव । देवस्यत्वेत्यादिवाक्य तूभय सत्वा युक्त निर्वपामीत्यतस्येकवाक्यत्वम् । अतश्च तावापवयजुष्ट्वमपि, तावत एवार्थप्रकाशकत्वेन यागसाधनत्वात । न च नयागसाधनत्वमात्रेण यजुष्ट्वम्, ऋच्यपितदापत्ते, जपादिसाधनेषु तदनापत्तेश्च, किंतु मन्त्रत्वावान्तर धर्मरूपमखण्ड तद्विरङ्गीकर्तव्य, तस्य च वेदत्ववत सर्वमन्त्रेषु व्यासक्ति कल्पनेऽपि यजुस्त्ववस्येव विनियोगेन प्रकाशकत्वापत्ते र्नयजुष्ट्वस्य पर्याप्तिकल्पने प्रमाण मस्तीतिवाच्यम् ,- "मन्त्रएव एतस्य निगद भूतो भवति तस्मादयजु" रित्यादौ वाक्येऽपि यजुःशब्दप्रयोगा त्पर्याप्ति वृत्तितोपपत्त । अन्यथाहि सत्सु मन्त्रवाक्येषु व्यासक्त यजुष्ट्वे एकस्मिन्निगदे यजुस्त्वयथाया प्रयजुःशब्दप्रयोगोपपत्ते । अतो वाक्य पर्याप्त यजुष्ट्वम् । एव मन्त्रत्वमपि वाक्ये मन्त्रशब्दप्रयोगात्पर्याप्तमेव । वेदत्वन्तु एकस्मिन्वाक्ये अधीते वेदोऽधीत इति व्यवहाराभावा द्व्यासज्यवृत्त्येवेति वक्ष्यते । नचैव मन्त्रत्व यजुष्ट्वयो र्वाक्यमात्रवृत्तित्वे किंचिन्न्यूनेऽपि वाक्येऽन्मन्त्रत्वायजुष्ट्वापत्तिः, गार्ग्यादिजातेरिवाणोया अभ्युगोत्वमात्याभिमानवदेन गोत्वव द्दहापि तदङ्गीकारे बाधकाभावात । अतएव चन प्रत्यभिज्ञा, यथा सोमाधेश्वाक्यतादय ह्रिमन्त्रा

रेषु, तत्र नैव मन्त्राणां नियुक्तं प्राक् । तस्मात् सिद्धं वाक्यमात्रवृत्ति यजुष्ट्वमिति ।

सूत्रन्तु यद्विभज्यमानं साकांक्षं पदजातं तदर्थैकार्थं च स्येकं वाक्यमित्येव लोकेप्रसिद्धं, अतस्तादृशवाक्यवृत्त्येव यजुष्ट्वमि त्येवमध्याहारेण व्याख्येयं । ननु यथा श्रुतमेव वाक्यलक्षणपरं मेक वाक्यावलक्षणपरं वा, पूर्वोक्तमन्त्रप्रस्तावेनासंगतत्वापत्तेः । अतो मन्त्राणां तदविभागेपूर्वं निरूपिते अधुना तदवान्तरभेदस्य यजुषःपरिमाणं निरूप्य तइति द्रष्टव्य । अतएव ऋक्सामरूपयो स्तदवान्तरभेदयो रप्ये वसिद्धपरिमाणत्वा त्तदनिरूपणेपि नक्षतिः ।

इति यजुःपरिमाणाधिकरणम् ॥ १४ ॥

---

## अथ वाक्यभेदाधिकरणम् ।

---

॥१॥ सू — समेषु वाक्यभेदःस्यात् ॥ २ - १ - ४०॥

तदेवं विभज्यमानसाकांक्षत्वविशिष्टार्थैकत्वप्रयुक्तवाक्यैकत्वेन यजुः परिमाणे चिन्तिते, अधुना विभज्यमानसाकांक्षत्वादिकमेव कियत्सु पदेषु व्यासक्तमिति विचार्यते । दर्शपूर्णमासयोः "इषेत्वोर्जे त्वा वायवस्थ" इत्यादि समाम्नायते । तत्र वायवस्थेत्यादेस्तावद्वत्सापाकरणे विनियुक्तस्य स्थेति क्रियापदसत्त्वात् वायुवच्छीघ्रगामिनो भवत मातृसमीपं पुनरागामिनो भवते त्युक्ते चार्थादपाकरणप्रतीतेर्देवस्यत्वेति मंत्रवदेव शुद्धान परिमाणं, 'इषेत्वे' त्यादे स्त्वेकवचनांतस्य शाखाच्छेदनादौ विनियुक्तस्य वायवस्थेत्यनेनैक वाक्यत्वासंभवात्ततोभिन्नत्वेनावगतस्यापि स्ववाक्ये आख्यातपदाश्रवणा प्रसुप्तान परिमाणमिति चिन्त्यते कियदेकं यजुरिति । तथा वाजपेये पठितं

"आयुर्यज्ञेन कल्पतां प्राणोयज्ञेनकल्पतां अपानोयज्ञेन कल्पतां" मित्यादि। तत्रापि कियदेकं यजुरिति चिन्त्यते। तदर्थं चार्थैकत्व विभज्यमानसा कांक्षत्वे कियत्तु पर्याप्ते इत्यपि चिन्तनीय।

तत्रेषेत्वेत्यादावाख्यातपदा श्रवणेपि साकांक्षत्वा सत्तावदवश्यं कल्पनीयं। नच साकांक्षार्थज्ञानस्यापि मन्त्रजन्यस्यादृष्टार्थत्वेन जपादिव दुपपत्ते नाध्याहारावश्यकत्वमितिवाच्यं, "इषेत्वेति शाखांछिनत्ति ऊर्जे त्वेत्युन्मार्ष्टी"तीतिकरणेन च्छेदनाद्यगतत्वेन मन्त्रविनियोगा त्मन्त्र इतिकर णावगतकरणत्वस्य चाभिधानं विनानुपपत्ते छेदनादिप्रकाशकत्वावगमेन छिनद्मीत्यादि पदाध्याहारावश्यकत्वप्रतीतेः। अतश्चाश्रूयमाणस्यैकस्यैवा ख्यातस्य कल्पनोपपत्तौ अनेककल्पने प्रमाणाभावा दिषेत्वोर्जेत्वेति पदचतु ष्टयांते एकमेव तदध्याहृियते। यद्यपिच विनियोगभेदात्पूर्वपक्षेपि छिनद्मि त्यन्मार्ज्मीत्याद्याख्यातद्वयकल्पनमावश्यकं, तथापीषेत्वेत्यस्य सामर्थ्या त्प्रा करणिकसर्वयोग्यक्रियार्थत्वस्यावगतस्या न्यक्रियाविषये बाधे ऽप्युन्मार्जन विषयेपि बाधे प्रमाणाभावेन समस्तस्यैवैकत्वविनियोगावगते रेकवाक्य त्वोपपत्तिः। नचोर्जेत्वेत्युन्मार्ष्टीत्यस्यैवपदद्वयमन्त्र विनियोजकस्य ब्राह्म णवाक्यस्य सामर्थ्यमात्रेणेषेत्वेतिपदद्वयबाधकत्वं, तस्य प्रतीकग्रहणेनापि समस्तविनियोजकत्वोपपत्तौ सामर्थ्यबाधे प्रमाणाभावात। नचैषेत्वेति शाखां छिनत्तीत्यस्यादिप्रतीकेन समस्तविनियोजकत्वोपपत्ता वप्यूर्जेत्वे त्यस्य कथम्मध्यप्रतीकेन समस्तविनियोजकत्वमिति वाच्यम, "आनः प्राण एतुपरावत आंतरिक्षाद्दिवस्परि। आयुःपृथिव्या अध्यमृतमसि प्राणायत्वे" ति मन्त्रस्य "प्राणायत्वेति हिरण्यमभिव्यनीति" त्यनेनांतिमप्रतीकेनापि विनियोगस्य संकर्षेवक्ष्यमाणत्वात, तन्न्यायेनात्र मध्यमप्रतीकेनापि समस्तविनियोगोपपत्ते। अतश्च समस्तस्यैकाख्यातकल्पकत्वेनैकार्थ त्वा त्सिमश्च सर्वेषामनन्वये अनिवृत्ताकांक्षत्वेन विभज्यमानसाकांक्षत्वा दप्यवाक्यताळाभेन यजुष्ट्वोपपत्तिः। बल्पयादिमन्त्रेतु यद्यपिकल्पत

तस्मात्पूर्वोक्तविधयैवैकवाक्यत्व। इतिमाप्तेभिधीयते-नात्रैकवाक्यार्थं। तथाहि-आद्योदाहरणे तावद्विनियोगभेदेनैवार्थभेदान्नार्थैकत्व। नच मध्यांत प्रतीकेन समस्तस्यैवोभयत्र विनियोगान्नप्रत्येकमर्थभेद ? तत्राद्यादिमध्यान्त प्रतीकेनविनियोगः, यत्रमंत्रस्वरूपाम्नानवेळायामेव पदानां परस्पराकांक्ष त्वम् , यथासंकर्षोदाहृतेमंत्रे। तत्राहि "प्राणायत्वेतिहिरण्यमभिव्यनिमी" त्युक्ते कथं हिरण्याभिव्यननस्य प्राणप्राप्त्यर्थतेत्यपेक्षिते परावतोदूरदेशा दन्तरिक्षाद्दिवश्च परिस्रवतः प्राणः नः अस्मानागच्छतु यच्चपृथिव्याअधि उपरि आयुः तदप्यागच्छतु यतस्त्वामृतायेन प्राणदानसामर्थ्यादित्यन्योन्या कांक्षत्वं मंत्रस्वरूपाम्नानवेळायामेवप्रतीयते । अतस्तत्रपुर्वतोमध्यां त्यप्रतीकेनापिविनियोगः । प्रकृतेतु मंत्रस्वरूपालोचनवेळाया मिवे क्षेत्रयस्योर्जेत्वेत्यनेन निराकांक्षत्वप्रतीतिः यत्राद्यन्तमध्यमानोविनियोग एकोपि नप्रतीकग्रहणायालं, पूर्वांपरतन्तैरपेक्ष्यभंगापत्ते । किमुतपदा र्थापेक्षितोविनियोगभेद एवस्पष्टतरोवधार्यते तदाकः प्रसंगोम ध्यांत्यप्रतीकेन समस्तविनियोगस्य । किंचाख्यातकल्पकताव च्छेदकं तत्रगुरुभूतम् । पुनश्चकार्यकारणभावद्वयेपि कारणतावच्छेदकैक्या द्व्यभिचारप्रसंगः ।

यत्तु-सामर्थ्यबलेन इषेत्वेत्यस्योन्मार्जनांगत्वावगमात् तद्बाधार्थं सम स्तविनियोग इत्युक्तं । तत्सामर्थ्यकल्प्य श्रुतेः पूर्वमेव प्रापक्षश्रुत्या छेदनांगत्वेन विनियोगेवगते सामर्थ्यस्य श्रुत्यकल्पकतया दुन्मार्जनांग ताबोधकप्रमाणाभावे नोपेक्षणीयम् ।

तस्मादुर्जे कार्यविशिष्टाविभज्यमान साकांक्षत्वाभावात् भिन्नवा क्यताम्प्रतीते .युक्ता यजुर्भेदः ।

द्वितीयोदाहरणेतु सारूप्यैकत्वे विभज्यमानसाकांक्षत्वाभावान्न विभागमन्त्रयदेकवाक्यत्वं । नच लक्ष्मी यांचयतो त्यनेन सर्वेषां कल्पता मितिपदानां समुच्चयविधानात् देकस्मिन् लक्ष्मिप्रकाशने सादि

र्थावगते विभज्यमानसाकांक्षत्वोपपत्तिः, सकृदुच्चरितस्यैव पदस्यकॢप्तिबोधजनकत्वेनकॢप्तिबोधेनैकपदसाहित्यस्य बाधितत्वात् ।कॢप्तीर्याच यतीयत्र च न कॢप्तिपदं कल्पतामिति पदपरं, तद्घटितमन्त्रपरंवा, लक्षणाप्रसंगात् । अपितु कॢप्तिरूपार्थपरमेव । नच कॢप्तिरूपार्थपरत्वे तस्योच्चारणानुकूल व्यापारत्वान्वि वाचयत्यन्तर्गत वाचिकर्माद्यनुपपत्तिः, वचपरिभाषणइत्यनुशासनबलेन वचेरभिधानार्थत्व, वसाया त्त प्रापयंत्य कर्माद्योपपत्तेः । अतएव क्वाचित्को वचेरुच्चारणे प्रयोगो लाक्षणिकइत्यनुसन्धेय । एवंच कॢप्तिपदस्यार्थपरत्वावश्यापा त्त स्याच्च बहुवचनबलात् भेदावगते रर्थभेदा त्यवसुलभएव । युक्तश्चोत्तराधिकरणन्यायेन यावत्प्रथमान्त कॢप्तिभेदइति न कपिञ्जलाधिकरणन्यायेन त्रित्वमात्रपर्यवसानाशंका । विभागमन्त्रेतु बहुवचनाभावात्कारकभेदस्यच स्वरूपेणा समर्पितत्वा एकस्यामपि क्रियायां स्तुतिमात्रार्थत्वेनोपपत्ते न भेदकतेति विशेषः ।

अतश्च कॢप्तीर्यावतीत्यस्य कॢप्तिभेदकतयाप्युपपत्तं इतःमंत्रसमुदायस्य च मंत्राणां भिन्नार्थत्वादेवाविच्छेदे रर्थभेदावगमाद्विभज्यमानसाकांक्षत्वस्य च दूरपराहतत्वाद्वाक्यभेदावगमेन यजुर्भेदोपपत्तिः । प्रयोजनं प्रथमोदाहरणेस्पष्टमेव । द्वितीयेतुयावन्मंत्र कॢप्त्यादयनुषङ्गानमेकमंत्रश्लेषेवा तत्तन्मन्त्रोच्चारणेसिद्धान्ते । पूर्वपक्षेतु सकृदेवतदनुषङ्गानं समस्तोच्चारणंचेतिद्रष्टव्यम् ।

सूत्रंतु-समेष्वन्योन्य निराकांक्षेषु वाक्यभेदस्स्यादितिस्पष्टम् ।

इति वाक्यभेदाधिकरणम् ॥१५॥

## अथ अनुषंगाधिकरणम् ॥

॥१॥ सू - अनुषंगोवाक्यसमाप्ति स्सर्वेषु तुल्ययोगित्वात् ॥२-१-४८॥

ज्योतिष्टोमे तिसृणामुपसदां द्वितीयतृतीयचतुर्थेष्वहस्सु पूर्वाह्णा पराह्णभेदेन द्विरावृत्त्यानुष्ठीयमानानां क्रमेणोदितायां मंत्रत्रयमुपसदङ्गभूतहोमांगत्वेन समाम्नातम् । तथाच – "अग्नेयाऽशयातनूर्वर्षिष्ठो ग्रवचो अपावधीत्वेषवचो अपावधीत्स्वाहा" इति । द्वितीयतृतीयोस्तु "यातेअग्नेरजाशया यातेअग्नेहराशया" इति । एतेषांच मन्त्राणां क्रमेणैकैकस्यतत्तदहः क्रियमाणोपसदंगभूतहोमाङ्गत्वेऽप्यविवादः । तयोस्तयोर्मन्त्रयो र्यच्छब्दश्रुतिलिङ्गनिर्देशात् स्त्रीवाचकपदसाकांक्षतावगते रवश्यं कश्चित्तत्परिपूरणसमर्थो वाक्यैकदेशः कल्पनीयः । नचाध्ययनविधिना ध्ययनोपायनियमा त्कथमनधीतस्य तदेकवाक्यत्वोपपत्ति रितिवाच्यम्, मापसपठिते वेदे तन्नियमेऽपि अनधीते यथा दिपदवदेषवेदैकदेशत्वोपपत्तेः । तत्रचावश्यकल्पनीये वाक्यैकदेशे किंलौकिकोऽध्याहर्तव्यः उतवैदिकएवतनू रित्यादि राद्यमन्त्रैकदेशो नुषंजनीय इतिसन्देहः ।

अत्रानुषंगपक्षे आम्नानस्य सर्वार्थत्वेनैव साधयिष्यमाणत्वेनानुषक्तस्याम्नातत्वेन मन्त्रत्वस्यचानुष्टुत्वस्याप्युपपत्तेः पूर्ववद्यजुःपरिमाणचिन्तात्मकत्वेन संगत्युपपत्तिः ।

तत्रवैदिकशेष आद्यानन्तरपठितत्वा दपेक्षितदेशपाठाच्चाद्यस्यैव स्वारस्येन सम्बद्ध्यते नानन्तरयो रिति तावदविवादम् । अतश्चागृह्यमाणविशेषत्वा त्प्रयाजादिवत्सर्वार्थं एवायमाम्नात इति नैवाशङ्कितुंशक्यम् । नचविशेषस्याग्रहणेन निराकांक्षत्वा त्युत्तरयोस्साकांक्षत्वात्तदन्वयोपपत्तिः, तयोरप्यनिबद्धलौकिकशेषग्रहणेन निराकांक्षयो राद्यमन्त्रमात्रनिबद्धवैदिकशेषग्रहणानुपपत्तेः । अतएव अग्निमु

यथाप्रस्तुतवत्" इत्यस्य लौकिकाग्निग्रहणेनापि निराकांक्षत्वात्कार्यविशेषपुरस्कारेण निषिद्धानां वचनव्यतिरेकेण पतनाद्यहेतुत्वमशक्यानां माहवनीयादीनां मग्निपदेनाग्रहणमिति वक्ष्यते । एवंच सत्यपि यदि लौकिकस्याग्नेः प्रकृतत्वाद्वाग्नेर्धीमंत्रन्यायेनापि प्रकृतस्यैव वैदिकस्य तनूरित्यादि ग्रहणमित्याशक्येत ? तत्र आग्नेयीमन्त्रस्यान्यत्रविनियुक्तस्यापि कुशादग्न्यादय इतिवत्प्रमस्तस्यान्यत्रविनियोगे मन्त्रवानपाये मन्त्रैकदेशस्य तनूरित्यादि रन्यत्रनयने मन्त्राभावापत्तिः । अतश्चोपस्थितस्याग्नेरपि स एव गृह्यते । नन्वेतावतास्य मन्त्रत्वं यजुष्ट्वं वाद्वाक्यमापादयितुमितितद्भेदे यजुर्भेदनिमित्त प्रायश्चित्तापत्तिरिति प्राप्ते —

अभिधीयते । वैदिकस्यैव सर्वत्रानुषंगः,तस्य सर्वार्थमाम्नातत्वात् । यथैवहि तनूरित्यादि राधमंत्रसबधे आकांक्षासन्निधियोग्यता कारणं तथैवोत्तरमंत्रद्वयसंबंधेपि । तथाहि । आकांक्षातावत् द्विशेष्यविषयिण्यायस्यैवोत्तरयो रप्यविशिष्टा । योग्यताच निराकांक्षीकरणसामर्थ्यरूपा पूर्वस्मिन्निवोत्तरयो रप्यविशिष्टैव । सन्निधिस्तु यद्यप्यानंतर्यरूपो नाविशिष्टः,तथाप्यसम्बंधिपदाव्यवधानरूपोऽ विशिष्टएव ।नह्यानंतर्यमेव सन्निधिश्शाब्दबोधकारण, तदभावेपि देवदत्तगामानयेत्यादौ देवदत्तादिपदानामानयनान्वयदर्शनात् ; अपितुसम्बन्धिपदाव्यवधानमेव। गोशब्दस्यच सत्यपिव्यवधायकत्वे आनयनान्वयित्वेनासंबंधित्वम् । अतश्च प्रकृतेप्याद्यवद्द्वितीयतृतीयेपि चोक्तरूपसन्निधिरविशिष्टः । नच द्वितीयेसन्निध्युपपत्तावपि तृतीयेतेनैव व्यवहितत्वात्कथं सन्निधानोपपत्तिरितिवाच्यम् , द्वितीयस्यापि शेषान्वययोग्यत्वेन गोपदवदेवासम्बन्धित्वाभावात् । अतश्च सम्बन्धिपदाव्यवधानरूपस्य सन्निधानस्य सर्वेष्वविशेषात्सर्वार्थ माम्नानावगते स्सर्वसम्बन्धोपपत्तिः । अतर वैकस्यैवाऽन्वयोदितानन्तर्यं । यथापेक्षितश्च स्वपाठोत्तरकाले , पाठोऽप्याकं

चिाकरः,सर्वमंत्राव्यवहितानंतर्यस्य सकृत्पाठे शक्यत्वेना वृत्तपाठस्य चाकांक्षादित्रयेणैव सर्वार्थत्वज्ञानोपपत्ते रनर्थकत्वेन सर्वान्तपाटनियमस्यचा पादयितुमशक्यत्वेन एकाव्यवधानस्या वर्जनीयात्वात् । इतरयोरपेक्षितदेशोच्चारणस्य लिंगेनैव ज्ञातुं शक्यत्वाच्च । ततश्च युक्त माकांक्षादित्रयसाधारण्या त्सर्वार्थत्वम् । नचैव मव्यवधानस्या न्वयाप्रयोजकत्वे समानपदप्रत्यासत्त्यायागस्यैवकरणत्वोक्ति र्विरुध्येतेति वाच्यम्, अव्यवहितानंतर्यस्यान्वयतात्पर्यग्राहकत्वाभावे प्यन्वयनियामकत्वोपपत्तेः । तत्रहि फलनिरूपकत्व कि यागस्योतसोमादेरित्यनियमे प्राप्ते नियामकमात्रं पदप्रत्यासत्तिः । प्रकृतेत्वाकांक्षादित्रयसाधारण्या त्सर्वत्रनियमेनैव सम्बन्धप्राप्तेर्नानंतर्यस्यनियामकत्वोपपत्तिः । नह्ये कस्यनैराकांक्ष्येणेतरयोर्नैराकांक्ष्यं शक्यते वक्तुं । ततश्च यथैव प्रयाजादीनां सत्यप्याग्नेयाव्यवधाने अग्नीषोमीयादे रप्याकांक्षादित्रयसाधारण्यात्सर्वार्थत्व मेवमिहापिद्रष्टव्यम् । तस्मा द्वैदिकस्य सर्वसम्बन्धरूपानुषंगएवयुक्तः, नतुक्रमिकान्वयांगीकारेणैकसम्बंधएव वैदिकत्वम् इतरसम्बंधेत्वलौकिकत्वमिति। यत श्शेषान्वयं विनाआद्यस्येवेतरयोरपि न परिसमाप्ति रतस्सर्वेषु तुल्याम्नानादनुषंगइतिसूत्रार्थः । प्रयोजनंतु तद्रूपे यजुर्भेदमाक्षिप्तमाप्तिस्स्पष्टैव ।

एवं तावदनेकेषा मुत्थिताकांक्षाणां सन्निधावाम्नायमानश्शेषस्सर्वत्रानुषज्यतइत्युक्तम् । इदानीं तूत्थाप्याकांक्षाणा मनेकेषां सन्निधावाम्नायमान श्शेषस्सर्वत्रानुषज्यते नवेति विषयव्यापयर्थ तस्मिन्नेव सूत्रे विचार्यते । ज्योतिष्टोमे यजत्रानपावनार्थामन्त्राः- " चित्पतिस्त्वापुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सवितापुनात्वि " त्येवंविधाः क्रियापदान्तरेण स्वतोनिराकांक्षाः पठिताः । तेषामन्ते "अच्छिद्रेण पवित्रेण वसोस्सूर्यस्य रश्मिभि"रिति क्रियासाकांक्ष श्शेषस्समाम्नातः । स किं मन्त्रान्तरेणैव मन्त्रेणसम्बध्यते उतसर्वैरपीति विचारः ।

तत्र तेषां तावत्स्वरूपेण निराकांक्षत्वा च्छेषाकांक्ष यैवाकांक्षामुत्थाप्य सम्बन्धोवाच्यः । तत्रचैकपदसम्बन्धेनैव निरा

कांक्षस्य शेषस्य इतराकांक्षो व्यापकत्वे प्रमाणाभावात् नियामकत्वे क्षायां यागादाविव नान्तर्यस्य नियामकत्वोपपत्ते र्न सर्वत्रानुषङ्ग । नचैवमपि यजमानं पावयतीति विधिनाविहितस्यैकस्यैव पावनस्य त्रिभिरपि मन्त्रै प्रकाशनादच्छिद्रादेश्च पूर्वसाधनीभूत प्रकाश्यमानपावनक्रियाकरण प्रकाशनार्थत्वा त्पूर्वमन्त्रयो रप्यन्तिममन्त्रव त्प्रयोगोपपत्तिरिति वाच्य, पावनक्रियैकत्वेपि मन्त्रभेदेन तत्प्रकाशनाना भेदाद् न्तिम प्रकाशनविषयीभूत पावनक्रियाकरणप्रकाशनार्थस्यैवा न्त्यमन्त्रद्वयगतत्वेन चिरपस्यादि कर्तृव्यवस्थावदेव करणव्यवस्थाया अप्युपपत्ते. । नचात्रमन्त्राणा विकल्प येनैकस्मिन्नेव प्रकाशने त्रयाणा व्रीहियवयोरिव धर्माणामव्यवस्थापत्ति, सत्यपि दृष्टार्थत्वे त्रिभिर्यजमान वाचयतीति वचनात् पार्थसारथि मिश्रधृता त्समुच्चयोपपत्ते । अतश्च विकल्पोक्ति र्याज्ञिकाचारविसंवादिनी वार्तिककारीयातिशय्यैव । अतश्च त्वत्पक्ष च्छिद्रादे स्तत्पावे प्रयाजादिव त्सकृत्प्रयुक्तस्यैव सर्वोपकारकत्वोपपत्ते र्न प्रत्येक प्रयोगाख्यानुषङ्गोपपत्ति ।

वस्तुतस्तु बोधायनादिकल्पपर्यालोचनया पावनस्यापि मुखनाभिगुल्फप्रदेशभेदेन त्रिरभ्यासो देवैक मन्त्रस्यैकैकाभ्यास करणत्वावगमा दानन्तर्यविशेषेणाच्छिद्रादे गुल्फप्रदेशसंस्कारार्थ पावनक्रियाभ्यास प्रकाशकपदैकवाक्यतया विजातीया पूर्वसाधनीभूत पावनक्रियाभ्यासागत्वावगते 'पयसा मैत्रावरुण श्रीणाति" वित्र दभ्यासान्तरे मानयभावाद्व्यवस्थोपपत्ति स्सुलभैव । अतो नेहशास्त्रके अनुषङ्गइति प्राप्तेभिधीयते -

आकांक्षादित्रयसाधारण्यात् अत्रापि सर्वासाम्नानावगमेनानुषङ्गेणैव वाक्यपरिसमाप्ति । तथाहि-सन्निधियोग्यत्वे तावत्पूर्ववदेवा विशिष्टे । आकांक्षाचापि यथैवान्तिमस्ये तदाकांक्षावशेन कल्प्या तथैव पूर्वयोरपि । अव्यवधानानन्तर्यस्य नियामकत्वासम्भवाति । तत्रहि तन्नियामक यत्र तत्प्रवृत्ते पूर्व विकल्पेनानेकेषु प्राप्ति, यथा प्रतिपदाधिकरणसिद्धान्तरीत्या यागसायो । प्रकृततुस्याप्याकांक्षाणामपि तेषां विनियमनाविरहेण प्रधानत्वा

रप्रतिप्रधानावृत्तिन्यायेन च प्रत्येकं समुच्चयेनैव शेषग्राहित्वावगते नियामकानाकांक्षत्वान्नानन्तर्यस्य सन्नियामकत्वोपपत्तिः । अतश्च यथैवाग्ने बहुहविष्कासु विकृतिषु श्रुतानामुपहोमानां विनिगमनाविरहेण प्रधानत्वेन च सर्वहविर्गतामेवाकांक्षां प्रकल्प्य समुच्चयेन सर्वार्थावगते नियामकाकांक्षाविरहेण नानन्तर्यस्य नियामकत्वं तथैव प्रकृतेपि पूर्ववदेव सर्वार्थं प्रम्नानावगते युक्तोनुषंगः ।

## इत्यनुषंगाधिकरणम् ॥ १६ ॥

---

## अथ व्यवेताननुषंगाधिकरणम् ।

॥ १ ॥ सू - व्यवायान्नानुषज्येत ॥ २-१-४९ ॥

असम्बन्धिपदाव्यवधाने सत्यनुषंगे साधिते यत्रासम्बन्धिपदव्यवधानं तत्रानुषंगो नास्तीति प्रत्युदाहरणार्थमिदं सूत्रं । यथा-"सन्ते वायुर्वायुनागच्छतां संयजत्रैरंगानि सपत्नपतिराशिषे" इत्यत्र गच्छतामित्यस्यां गानीत्यनेन तावद्योग्यत्वेनासम्बन्धात् असम्बन्धिपदव्यवधानेन संपत्नपतिराशिषेत्यनेन सत्यपि साकांक्षत्वे योग्यत्वे च सन्निधानाभावान्नानुषंगः । अतस्संयजत्रैरंगानीत्यत्र गच्छतामित्यस्येव सपत्नपतिराशिषेत्यत्रापि गच्छतामिति पदमध्याहर्तव्यम् ।

न चानयोः स्वाकांक्षत्वेपि गमनरूपस्यैवार्थस्य योग्यताबलात्पृथ्वकृत्वस्य स्यान्वयोपपत्तेः विमर्द एवाध्याहारवत्त्वेनेति वाच्यम् । ततत्पदार्थं शाब्दबोधत्वावच्छिन्नंप्रति वृत्तिमत्त्वसम्बन्धेन तत्पदज्ञानस्यैव कारणत्वात् । अन्यथा देवदत्तः पचतीति केनचिदुक्ते प्रत्यक्षदृष्टेनैव चैत्रेण धर्माधर्मानिपुणैः किं पचतीति प्रश्नानापत्तिः । अस्मन्मतेनु